**व्याख्या :** हे (वेदों के रक्षक) बृहस्पति ब्रह्मणस्पति मुझे सोमयाग का कर्ता तथा मन्त्रद्रष्टा बनाइए जैसा कि कक्षीवान् को आपने बनाया था, जो उशिक् (नाम्नी माता के पुत्र थे)। अर्थात् ऋषि कक्षीवान्-की तरह मैं भी देव स्तोता तथा सोमयाजी बनूँ।

**म० :** 'सोमानमित्यनुदकं व्रतोपायनवत्' (का० 4/12/10)। व्रतेत्यपरेणाहवनीयं प्राङ्तिष्ठन्नवर्चं जपतीति सूत्रार्थः। सोमानं स्वरणं तृचो गायत्रो ब्रह्मणस्पतिदेवत्यस्तैनैव दृष्टः। अग्निमीक्षमाणस्य यजमानस्य जपे विनियुक्तः। हे ब्रह्मणस्पते वेदस्य पालक, सोमानं सोमानामभिषोतारम्। स्वरणं 'स्वृशब्दोपतापयोः' शब्दयितारम्। कृणुहि कुरु। मामिति शेषः। सुनोतीति सोमा तम्। 'अन्येभ्योऽपि दृश्यन्ते' (पा० 3/रु/75) इति मनिन्। स्वरतीति स्वरणः। नन्द्यादित्वात् ल्युः। सोमयागकर्तारं स्तुतिरूपशब्दयुक्तं च धनप्रदानैर्मा कुर्वित्यर्थ5। तत्रोपमानमुच्यते। कक्षीवन्तं कक्षीवन्नामकमृषिं दीर्घतमःपुत्रं यथा सोमयागयुक्तं स्तुतियुक्तं च कृतवानसि तथा मां कुरु। उपमानद्योतक इवशब्दोऽत्र इवशब्दोऽत्र लुप्तो द्रष्टव्यः। कोऽसौ कक्षीवान्। य औशिजः उशिजः पुत्रः। उशिक् कक्षीवतो माता ।।28।।

## एकोनत्रिंशी

**यो <u>रे</u>वान् योऽअ॑मीव<u>हा</u> व॑सु॒वित् पु॑ष्टि॒व॑र्धनः। स न॑ः सिषक्तु यस्तु॒रः ।।२९।।**

**अन्वय :** यो ब्रह्मणस्पतिः रेवान् यः अमीवहा, वसुवित् पुष्टिवर्धनः यश्च तुरः स नः सिषक्तु।

**व्याख्या :** जो (ब्रह्मणपति) बृहस्पति धनवान् रोगों को नष्ट करने वाले धनों के दाता, पुष्टि को बढ़ाने वाले तथा शीघ्रंकार्य करनेवाले हैं वे हमें प्राप्त हों। अर्थात् अग्नि की कृपा से उपरोक्त गुणगण सम्पन्न पुत्र हमें प्राप्त हो।

**म० :** यो ब्रह्मणस्पतिः रेवान् धनवान्। यश्चामीवहा अमीवस्य रोगस्य इन्ता। 'अम रोगे'। 'अमेरीवः'। वसुवित् वसु घनं वेत्तीति। यश्च पुष्टिवर्धनः षोषणस्य वर्धयिता। यश्च तुरः 'तुर वेगे' 'इगुपध–' (पा० 3/1/135) इति कः। वेगवान् अविलम्बितकारी। स ब्रह्मणस्पतिर्नोऽस्मान् सिषक्तु सेवताम्। 'सिषक्ति सचते इति सेवमानस्य' (निरु० 3/21) यद्वा

अनयर्चा पुत्रः प्रार्थ्यते। यः पुत्रो रेवान्धनवान् यश्च व्याधेर्हन्ता जपादिना यो धनस्य लब्धा पुष्टेश्च वर्धयिता यः तुरः शीघ्रकारी तादृशः पुत्रोऽग्नेः प्रसादान्नोऽस्मान् सिषक्तु सेवताम् ।।29।।

**त्रिंशी**

**मा नः शर्ठ्ठंसोऽअररुषो धूर्तिः प्रणङ्मर्त्यस्य। रक्षाणो ब्रह्मणस्पते ।।३०।।**

**अन्वय :** (हे) ब्रह्मणस्पते अररुष अदानशीलस्य मर्त्यस्य शंसः धूर्तिः नः मा प्रणक् (प्रकर्षेण मा नाशयतु) अतो नो रक्ष।

**व्याख्या :** हे वेदज्ञान के अधिपति अग्निदेव! कभी भी दान न देने वाले देवविरोधीमनुष्यों के शापादि दुर्वाक्य हमारे प्रति उनका अनिष्ट चिन्तन, तथा जो कुटिलआचरण से युक्त हैं ऐसे लोग हमें कष्ट न दें। इनसे आप हमारी रक्षा करें।

**म॰ :** 'रा दाने' इति धातोः क्वसुन्नन्तस्य षष्ठ्येकवचने ररुष इति रूपम्। ररौ इति ररिवांस्तस्य ररुषः। दानं कृतवत इत्यर्थः। तस्य निषेधादररुष इति। कदाचिदपि हविर्दानमकृतवत इत्यर्थः। तादृशस्य मर्त्यस्य मनुष्यस्य शंसो धूर्तिश्च नोऽस्मान् मा प्रणक् प्रकर्षेण व्याप्नोतु। नशिव्याप्त्यस्यर्थः। यद्वा 'नश अदर्शने'। मा प्रणक् प्रकर्षेण मा नाशयतु। शंसनं शंसोऽनिष्ट-चिन्तनम्। धूतिर्हिंसा। 'ध्वरति धूर्वति' (निघ॰ 2/19) इति वधकर्मसु पठितत्वात् शत्रुकृतमनिष्टचिन्तनं शत्रुकृताहिंसा चास्मान् मा व्याप्नोत्वित्यर्थः। किंच हे ब्रह्मणस्पते वेदस्य पालकाग्ने, नोऽस्मान् रक्ष। 'द्व्यचोऽतस्तिङः' (पा॰ 6/3/135) इति संहितायां दीर्घः। णत्वं पूर्ववत् ।।30।।

**एकत्रिंशी**

**महिं त्रीणामवोऽस्तु द्युक्षम्मित्रस्यार्य्यम्णः। दुराधर्षंव्वरुणस्य ।।३१।।**

**अन्वय :** मित्रस्य अर्यम्णः वरुणस्य एतेषां त्रीणाम् (त्रयाणां) महि (महत्) द्युक्षम् अमोघगमनं दुराधर्षम् अवः (पालनमस्तु)।

**व्याख्या :** मित्र अर्यमा (सूर्य) और वरुण, इन तीनों देवताओं की शरण (रक्षण) हमें प्राप्त हो जो महान, कान्तिमान् सुवर्णादिद्रव्यों से युक्त, तथा शत्रुओं से सर्वथा अदम्य है। इस मन्त्र का पाठ यात्रा के

समय अपनी रक्षा के लिए करना चाहिए। इन देवताओं का स्मरण यात्राकाल में मंगलदायक होता है।

**म० :** सत्यधृतिदृष्ट आदित्यदेवत्यस्तृचो गायत्रीजपे विनियुक्तः पथि जप्त उपद्रवनाशकश्च। मित्रस्यार्यम्णो वरुणस्येति त्रीणां त्रयाणां देवानां संबन्धि अवः पालनमस्तु। किंभूतमवः महि महत् तथा द्युक्षं द्युमन्ति सुवर्णादिद्रव्याणि क्षियन्ति निवसन्ति यस्मिन् पालने तथाविधम्। दुराधर्ष तिरस्कर्तुमशक्यम्। त्रीणां त्रिशब्दस्यामि छन्दसि त्रयादेशो वेति वाच्यम् (पा० 7/1/53) ।।31।।

## द्वात्रिंशी

**नहि तेषाममा चन नाध्वसु वारणेषु। ईशे रिपुरघशंसः ।।३२।।**

**अन्यय :** तेषाम् (आदित्यादिपालितानाम्) अमा चन (गृहेऽपि) अध्वसु वारणेषु अघशंसः रिपुः न ईशे (समर्थो न भवति)।

**व्याख्या :** इन तीनों देवताओं से रक्षित मनुष्यों का घरों में, मार्गों में युद्ध आदि में पापकर्मा शत्रु कुछ भी अनिष्ट करने में समर्थ नहीं होते। अर्थात् मित्रादि देवताओं से रक्षित मनुष्यों को कही भी भय नहीं होता है।

**म० :** अमाशब्दो गृहनामसु पठितः (निघ० 3/4/11)। चनशब्दोऽप्यर्थे। अमा चन गृहेऽपि वर्तमानानां तेषां तथा वारणेषु चोरव्याघ्रादयो यत्र स्थिता निवारयन्ति पथिकान् ते वारणास्तेषु चोरव्याघ्रादयो यत्र स्थिता निवारयन्ति पथिकान् ते चारणास्तेषु चोरव्याघ्रभ्याढ्येषु अध्वसु मार्गेषु वा वर्तमानानां तेषां त्रिर्यमवरुणैस्त्रिभिर्देवैः पालितानां यजमानामुपद्रवायेति शेषः। अघशंसः सर्वदा पापस्य प्रशंसको रिपुः शत्रुः नहि ईशे समर्थो न भवति। 'लोपस्त आत्मनेपदेषु' (पा० 7/1/41) इति तलोपः। 'अधीगत्यर्थदयेषां कर्मणि' (पा० 2/3/52) इति तेषामिति षष्ठी। मित्रादिभिः पालितानामस्माकं गृहेऽरण्ये वा नास्ति शत्रुबाध इत्यर्थः ।।32।।

## त्रयस्त्रिंशी

**ते हि पुत्रासोऽअदितेः प्रजीवसे मर्त्याय। ज्योतिर्यच्छन्त्यजस्रम्**

।।३३।।

**अन्वय** : हि यतस्ते अदितेः पुत्रासः मर्त्याय जीवसे जीवितुम् अजस्रं ज्योतिः यच्छन्ति।

**व्याख्या** : निश्चय ही पुर्वोक्त मित्र, अर्यमा वरुण ये अदिति देवमाता के पुत्र है। ये उपासकों को चिरजीवन के लिए निरन्तर ज्योति (प्रकाश) अर्थात् दीर्घजीवन प्रदान करते रहते हैं। बुद्धि प्रदान करते हैं।

**म०** : कथं तद्रक्षितानां शत्रुभयाभावस्तदाह। हि यतस्ते अदितेः अखण्डितशक्तेर्देवमातुः पुत्रासः पुत्रा। पूर्वोक्ता मित्रार्यमवरुणाः मर्त्याय मनुष्याय यजमानायाजस्रं निरन्तरमनुपक्षीणं ज्योतिः तेजः प्रयच्छन्ति। किमर्थं जीवसे जीवितुम्। यथा चिरं जीवनं भवति तथा तदुपायज्ञानं प्रयच्छन्तीत्यर्थः ।।33।।

### चतुस्त्रिंशी

**कुदाचुन स्तुरीरसि नेन्द्र सश्चसि दुाशुषे। उपोपेन्नु मघवुन्भूयऽ इन्नु ते दानन्देवस्य पृच्यते ।।३४।।**

**अन्वय** : हे इन्द्र! त्वं कदाचन स्तरीः (हिंसकः) नासि। दाशुषे उप इत् न सश्चसि। हे मधावन् देवस्य ते भूयः दानं, नु इत उप पृच्यते।

**व्याख्या** : हे इन्द्र आप कभी भी स्वजनों को कष्ट पहुँचाने वाले (हिंसक) नहीं है। हविप्रदाता यजमान की प्रसन्नता के लिए यज्ञभूमि में आकर शीघ्र ही अपनी हवि का ग्रहण करते हैं। हे ऐश्वर्यशाली, दिव्यगुणयुक्त देव! आपका प्रभूतदान शीघ्र ही हविदाता यजमान को प्राप्त होता है।

**म०** : ऐन्द्री पथ्या बृहती मधुच्छन्दोदृष्टा जपे विनियुक्ता। यस्यास्तृतीयः पादो द्वादशार्णोऽन्ये त्रयोऽष्टाक्षराः सा पथ्या बृहती। हे इन्द्र परमैश्वर्ययुक्त, कदाचन कदापि त्वं स्तरीर्नासि। 'स्तृञ् हिंसायाम्' स्तृणातीति स्तरीः हिंसको नासि। हिं तर्हिं दाशुषे सश्चसि। द्वितीयार्थे चतुर्थी। दाश्वांसं हविर्दत्तवन्तं यजमानं सेवसे। सश्चतिः सेवनकर्मा। किंच। हे मघवन् धनवन्, देवस्य प्रकाशमानस्य ते तव भूय इत् बहुतरमेव दानं नु इत् क्षिप्रमेव दाश्वांसमुपपृच्यते। 'पृची संपर्के' यजमानेन सह संपर्कं प्राप्नोति।

'प्रसमुपोदः पादपूरणे' (पा॰ 8/1/6) इत्येक उपशब्दः पादपूरणे। इच्छव्दावेवार्थे। नु क्षिप्रार्थः। न कदाचिद्यजमानं प्रति क्रुध्यसि सेवसे च। तं त्वदीपं भूयो धनं दाश्वांसमुपपृच्यत इति भावः ॥34॥

## पञ्चत्रिंशी

**तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि। धियो॒ यो नः॑ प्रचो॒दया॑त् ॥३५॥**

**अन्वय :** सवितुः देवस्य तत् वरेण्यं भर्गो धीमहि। यः नः धियः प्रचोदयात्।

**व्याख्या :** समस्त जीवों के प्रेरक, प्रकाशस्वरूप दिव्यगुणसम्पन्न सविता देवता के उस सर्वाभिलषित दिव्यतेज का हम ध्यान करते है, जो सभी जीवों के पापतापों को भस्म कर देता है। ऐसे सवितादेवता हमलोगों की बुद्धि को शुभ एवं उत्तम कर्मों में प्रेरित करे।

**म॰ :** विश्वामित्रदृष्टा सावित्री गायत्रीजपे विनियुक्ता। तदिति षष्ठ्यर्थे। तस्य देवस्य द्योतनात्मकस्य सवितुः प्रेरकस्यान्तर्यामिणो विज्ञानानन्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदित्यान्तरपुरुषस्य वा ब्रह्मणो वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गः सर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानानन्दादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायामः। छान्दसं संप्रसारणम् यद्वा मण्डलं पुरुषो रश्म इति त्रयं भर्गःशब्दवाच्यम् भर्गो वीर्यो वा। 'वरुणाद्ध वा अभिषिषिचानाखर्गोऽपचकाम वीर्य वै भर्गः' (5/4/5/1) इति श्रुतेः। तस्य कस्य। यः सविता नोऽस्माकं धियः बुद्धीः कर्माणि वा प्रचोदयात्प्रकर्षेण चोदयति प्रेरयति सत्कर्मानुष्ठानाय। यद्वा वाक्यभेदेन योजना। सवितुर्देवस्य तत् वरेण्यं भर्गो ध्यायामः। यश्च नो बुद्धीः प्रेरयति तं च ध्यायामः। स च सवितैव। लिङ्गव्यत्ययेन योजना। सवितुर्देवस्य तत् भर्गो धीमहि। यो यत् भर्गो नो बुद्धीः प्रेरयति ॥35॥

## षट्त्रिंशी

**परि॑ ते दू॒डभो॒ रथो॒ऽस्माँ२ अ॑श्नोतु वि॒श्वतः॑। येन॒ रक्ष॑सि दा॒शुषः॑ ॥३६॥**

**अन्वय :** (हे अग्निदेव) ते दूडभः रथः विश्वतः अस्मान् परि

अश्नोतु, येन दाशुषः रक्षसि।

**व्याख्या :** हे अग्निदेव, आपका अप्रतिहतगतिवाला तथा अवध्य रथ चारों ओर से हमारी रक्षा करें, क्योंकि इसी रथ से आप हविर्दाता यजमान की भी रक्षा करते हैं।

यहाँ पर बृहदुपस्थान पूर्ण होता है।

**म० :** आग्नेयी गायत्री वामदेवदृष्टा जपे विनियुक्ता। हे अग्ने, ते तव रथोऽस्मान् यजमानान् विश्वतः सर्वासु दिक्षु पर्यश्नोतु परितो व्याप्नोतु अस्मद्रक्षणाय सर्वतस्तिष्ठतु। किंभूतो रथः। दूडभः। दभ्नोतिर्वधकर्मा। दुःखेन दभ्यते दुर्दभः। केनापि सहसा हिंसितुमशक्यः। 'उकारं दुर्दे०' (प्रा०का० 3/3/4) इति प्रातिशाख्यसूत्रेण दुरो रेफस्य उकारः अग्निपदस्य डः। येन रथेन त्वं दाशुषो यजमानान् रक्षसि पालयसि। 'यजमाना वै दाश्वांसः' (2/3/4/38) इति श्रुतेः ॥36॥

## बृहदुपस्थानं समाप्तम्

## सप्तत्रिंशी

**भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याथ्ँ सुवीरो वीरैः सुपोषः पोषैः। नर्य प्रजाम्मे पाहि शथ्ँस्य पशून्मे पाह्यथर्य पितुम्मे पाहि ॥३७॥**

**अन्वय :** हे अग्ने भूः भुवः स्वः लोकत्रयात्मक! त्वत्प्रसादादहं प्रजाभिः सुप्रजाः स्याम्। वीरैः सुवीरः सुपोषैः स्याम! हे सुपोषः नर्य मे प्रजां पाहि। हे शंस्य आह्वनीय मे पशून् पाहि। हे अथर्य! दक्षिणाग्ने मे पितुं पाहि (रक्ष)।

**व्याख्या :** हे पृथिवी, अन्तरिक्ष और द्युलोकाधिपति अग्निदेव! अथवा तीनों व्याहृतियों में व्याप्त अग्निदेव! आपके अनुग्रह से मैं वीर पुत्र पौत्रादि सन्तति से सम्पन्न होऊँ। सुन्दर पुष्टिदायक पदार्थों (अन्नादि) से सम्पन्न होऊँ। हे मनुष्यों के हितकारी गार्हपत्यअग्नि। आप मेरे प्रजा (पुत्रादिकों) की रक्षा करें। मेरे गौ, अश्व आदि पशुओं की भी सम्भावित विपत्तियों से रक्षा करें, हे दक्षिणाग्नि, आप हमारे अन्न की रक्षा करें।

यहाँ से क्षुल्लकोपस्थान प्रारम्भ होता है

**म॰ :** अथ क्षुल्लकोपस्थानमासुरिदृष्टम्। 'भूर्भुवःस्वरिति वोभौ' (का॰ 4/12/12) इति। वाशब्दो विकल्पार्थः। पूर्वोक्तेनोपप्रयन्त इत्यादिना वक्ष्यमाणेन भूर्भुवःस्वरित्यादिना वोभावग्नी उपतिष्ठेत। उभयोपस्थानं कुर्यादिति सूत्रार्थः। हे अग्ने, भूर्भुवःस्वः त्वं व्याहृत्यादित्रयात्मकः तदर्थभूतलोकत्रयात्मको वा। अतस्त्वत्प्रसादादहं प्रजाभिः बन्धुभृत्यादिरूपाभिः कृत्वा सुप्रजाऽस्यामनुकूलत्वेन शोभनाः प्रजा यस्य तादृशो भवेयम्। तथा वीरैः पुत्रैः सुवीरः स्यां शास्त्रीयमार्गवर्तिशोभनपुत्रयुक्तो भवेयम्। यथा पोषैः हिरण्यदिपोषणैः सुपोषः स्यां बहुमूल्यार्हहिरण्यादियुक्तो भवेयम् ।।

प्रवत्स्यदुपस्थानमागतोपस्थानं चादित्यदृष्टम् ।।

'प्रवत्स्यन् सर्वान्नर्येषि प्रतिमन्त्रम्' (का॰ 4/11/13) इति। यद्वा यजमानो ग्रामान्तरं गन्तुमिच्छति तदानी सर्वानग्नीन्नर्येत्यादिमन्त्रैरुपतिष्ठेत। अथ मन्त्रार्थः। नर्य नरेभ्यो हित गार्हपत्य, मे प्रजां पाहि। आवहनीयमुपतिष्ठते। हे, शंस्य अनुष्ठातृभिः शंसितुं योग्याहवनीय, मे मम प्रजां पाहि रक्ष। दक्षिणाग्निमुपतिष्ठते। हे अथर्य दक्षिणाग्ने, मे पितुमंन्नं पाहि। अतनवानथर्यः अत सातस्यगमने सततं गार्हपत्यात् स्वस्थान दक्षिणाग्निर्गच्छति तेनाथर्यः। निपातोऽयम् ।।37।।

## अष्टत्रिंशी

**आग॑न्म वि॒श्ववे॑दसम॒स्मभ्यं॑म्वसु॒वित्तं॑मम्। अग्ने॑ सम्राडु॒भि द्यु॒म्नम॒भि सह॒ऽआयं॑च्छस्व ।।३८।।**

**अन्वय :** (वयं) विश्ववेदसम् अस्मभ्यं वसुवित्तमम् आगन्म (आगता)। हे सम्राट्! (आहवनीय) अग्ने! अभि द्युम्नं सहः (अस्मभ्यम्) अभि (आयच्छस्व) अस्मासु स्थापय।

**व्याख्या :** हम सर्वधन-संपन्न तथा उत्तम-धन प्रदान करने वाले अग्निदेव की शरण में आये हैं। हे सम्यक्दीप्यमान अग्निदेव, आप चारों ओर से धन, यश तथा बल हमें प्रदान करें।

यहाँ से तीन मन्त्रों के द्वारा हाथ में समिधा लेकर तीनों अग्नियों का उपस्थान वर्णित है।

**म॰ :** 'समित्पाणिरुपेत्य कंचिदुषतिष्ठत आहवनीयगार्हपत्यदक्षिणा-

ग्नीनागन्मेति प्रतिन्त्रम्' (का० 4/12/18) इति। समिधं हस्ते आदाय कंचिदपि जनमगत्वेव प्रथममेवाग्न्यगारं प्राप्यागन्मेत्यादिमन्त्रत्रयेणाहवनी-यादीनुपतिष्ठत इति सूत्रार्थः। अनुष्टुवाहवनीयदेवत्या। हे अग्ने, सम्राट् सम्यक् राजते दीप्यते सम्राट् तथाविधाग्ने आहवनीय, वयं त्वामगन्म त्वामुद्दिश्य ग्रामान्तरात्प्रत्यागताः। किंभूतं त्वाम्। विश्ववेदसं विश्वं वेत्ति वेदयतीति वा विश्ववेदास्तम्। विश्वं वेदो धनं यस्येति वा। सर्वज्ञं सर्वधनं वा। पुनः किंभूतम्। अस्मभ्यं वसुवित्तममस्मदर्थमतिशयेन वसुनो धनस्य वेदितारं लब्धारम्। किंच। हे अग्ने, द्युम्नं सहश्च अस्मभ्यमभि आयच्छस्व। 'दाण् दाने'। 'पाघ्रा-' (पा० 7/3/18) इत्यादिना यच्छादेशः। यशो बलं चास्मभ्यं देहि। 'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु० 5/5)। सह इति बलनाम (निघं० 2/9) यच्छस्वेति यमे रूपं वा। चायच्छस्व आगमय। यच्छतिः स्थापनार्थो वा। अस्मासु यशो बलं च स्थापय ।।38।।

## एकोनचत्वारिंशी

**अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः। अग्ने गृहपतेऽभि द्युम्नमभि सहऽआयच्छस्व ।।३९।।**

**अन्वय :** अयं गार्हपत्य अग्निः गृहपतिः प्रजायाः वसुवित्तमोऽस्ति। हे गृहपते अग्ने, अभि द्युम्नं सहः अस्मभ्यम् आयच्छस्व।

**व्याख्या :** यह गार्हपत्य-अग्निदेव ही घर के पालक है, पुत्र पौत्रादि की समृद्धि को प्रदान करने वाले है। हे गृहाध्यक्ष अग्निदेव आप चारों ओर से हमें धन, यश और बल प्रदान करें। इस मन्त्र में गार्हपत्यअग्नि का उपस्थान वर्णित है।

**म० :** गार्हपत्यमुपतिष्ठते। न्यङ्कुसारिणी बृहती। यस्या द्वितीयः पादो द्वादशाक्षरोऽन्ये त्रयोऽष्टाक्षराः सा न्यङ्कुसारिणी। अत्र तृतीयो नवार्णस्तेनै-काधिका। अयं पुरोऽवस्थितो गार्हपत्य एतन्नामकोऽग्निर्गृहस्य पतिः पालकः। प्रजायाः पुत्रपौत्रादिकायाः अनुग्रहार्थं वसुवित्तमः अतिशयेन धनस्य लब्धा। हे अग्ने, स त्वं द्युम्नं सहश्चाभ्यायच्छस्व देहि ।।39।।

## चत्वारिंशी

**अयमग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः। अग्ने पुरीष्याभि द्युम्नमभि सहऽआयच्छस्व ।।४०।।**

**अन्वय :** अयम् अग्निः पुरीष्यः रयिमान् पुष्टिवर्द्धनः (अस्ति) हे पुरीष्य (पशब्यः) अग्ने त्वं द्युम्नं सहः (अस्मभ्यम्) आयच्छस्व।

**व्याख्या :** हे दक्षिणाग्नि आप पशुओं के हितकारक हैं तथा धनवान् और पोषणशक्ति को बढ़ानेवाले है। अतः हे पशुपालक अग्निदेव, आप सभी ओर से हमें धन एवं बल प्रदान करें।

**म॰ :** दक्षिणाग्निमुपतिष्ठते। अनुष्टुप्। योऽयमग्निः पुरीष्यः पशव्यः। 'पशवो वै पुरीषं' इति श्रुतेः। रयिमान्धनवान् पुष्टिवर्धनः पोषस्य वर्धयिता। तं याचे। हे अग्ने, पुरीष्य पशुहित, द्युम्नं सहस्वाभ्यायच्छस्व देहि ।।40।।

## एकचत्वारिंशी

**गृहा मा बिभीत मा वेपध्वमूर्जंबिभ्रत एमसि। ऊर्ज विभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ।।४१।।**

**अन्वय :** (हे) गृहा, यूयं मा बिभीत मा वेपध्वम् ऊर्जं ब्रिभ्रतः एमसि, आगताःस्म। ऊर्जं बिभ्रद् सुमनाः सुमेधा मनसा मोदमानः वः गृहान एमि (आगच्छामि)। यहाँ ग्रामान्तर से लौटकर अपने गृह को सम्बोधित करता है।

**व्याख्या :** हे वसतिरूपगृह तुम निर्भय रहते हुए दृढ़ होओ, क्योंकि, अन्नादि की समृद्धि को धारण करके हम तुम्हारे पास आ गये है। बल को धारण करते हुए सुन्दर मन और शुद्ध बुद्धि से युक्त तथा प्रसन्नमन से हम तुम्हारे पास आ गये हैं।

**म॰ :** 'गृहा मा बिभीतेति गृहानुपैति' (का॰ 4/12/22) इति। ग्रामान्तरादागतो गृहामेत्यादिमन्त्रत्रयेण गृहं प्राप्नुयात्। तिस्रोऽपि वास्तुदेवत्याः शंयुदृष्टाः। त्रिष्टुब्विराड्रूपा। यस्या एकादशार्णास्त्रयः पादा एकोऽष्टार्णः सा विराड्रूपा। अत्र प्रथमो दशार्णस्तेनैकोना। हे गृहाः, यूयं मा बिभीत। पालको यजमानो गत इति भयं मा कुरुत। मा च वेपध्वम्। कोऽपि शत्रुरागत्य विनाशयिष्यतीति बुध्द्या कम्पं मा कार्ष्ट। यतो वयमूर्जं विभ्रतो धारयमाणानक्षीणान्नानेव युष्मान् एमसि। आ इमः आगताः स्मः। यथा यूयमूर्जं बिभ्रतः तथाहमपि ऊर्ज बिभ्रत् धारयन् सुमनाः शोभनमनस्कः सुमेधाः शोभनधारणप्रज्ञोपेतः। मनसा दुःखरहितेन मोदमानः हृष्यन् वो

युष्मान् गृहानैमि आगच्छामि। एमः ऐमीत्यात्मनि विकल्पेन बहुवचनम् 'अस्मदो द्वयोश्च' (पा० 1/2/51) इत्युक्तेः ।।41।।

### द्विचत्वारिंशी

**येषा॑मुध्येति॑ प्रवस॒न्येषु॑ सौमन॒सो ब॒हुः। गृ॒हानुप॑ ह्वयामहे॒ ते नो॑ जानन्तु जान॒तः ।।४२।।**

**अन्वय :** प्रवसन् (देशान्तरं गच्छन् यजमानः) येषाम् अध्येति (तान् गृहान् स्मरति) येषु बहु सौमनसः प्रीत्यतिशयः तान् गृहान् उपह्वयामहे, (आह्वयामः) ते गृहदेवा जानतः नो जानन्तु।

**व्याख्या :** प्रवास में रहता हुआ मेरा मन जिन घरों को सदा ही क्षेम की कामना से स्मरण करता है, जिन घरों में मेरे बहुत से प्रेमीजन निवास करते है, उन घरों के अधिपति देवताओं को हम सादर बुलाते हैं तथा वे घर हम लोगों को अच्छी तरह पहचानें। अर्थात् वे हमें अपना समझकर अपनेपन का अहसास करायें।

**म० :** अनुष्टुप्। प्रवसन् देशान्तरं गच्छन् यजमानो येषामध्येति। 'इक् स्मरणे'। यान् गृहान् स्मरति। 'अधीगर्थदयेशां कर्मणि' (पा० 2/3/52) इति षष्ठी। गृहविषयक्षेमं सदा चिन्तयतीत्यर्थः। तथा येषु गृहेषु यजमानस्य बहुः सौमनसो सुमनसो भावः प्रीत्यतिशयः। वयं तान् गृंहानुपह्वयामहे आह्वयामः। गृहाभिमानी देवोऽस्मत्समीपमागच्छत्वित्यर्थः। ते गृहदेवा आहूताः सन्तः जानतः उपकाराभिज्ञान् नोऽस्मान् जानन्तु। एते कृतघ्ना न भवन्तीत्यव-गच्छन्तु ।।42।।

### त्रिचत्वांरिंशी

**उप॑हूताऽइ॒ह गाव॒ऽउप॑हूताऽअ॒जावयः॑। अथो॒ऽअन्न॑स्य की॒लाल॒ उप॑हूतो गृ॒हेषु॑ नः। क्षेमा॑य व॒ः शान्त्यै॒ प्रप॑द्ये शि॒वꣳ श॒ग्मꣳ श॒ंयोः श॒ंयोः ।।४३।।**

**अन्वय :** अस्माकं गृहेषु इह गावः उपहूताः अजावयः उपहूताः (तिष्ठन्तु)। अथो अन्नस्य कीलालः (रसविशेषः) नः गृहेषु उपहूतः समृद्धो भवतु। हे गृहाः क्षेमाय शान्त्यै वः प्रपद्ये (प्रविशामि) शंयोः शिवम् शंयोः शग्मम्।

**व्याख्या :** हमारे इस घर में सवत्सा-गौएँ एवं बैल सुखपूर्वक रहें। भेड़ और बकरीजाति के पशु भी सूखपूर्वक निवास करें। और इस घर में अन्नसम्बन्धी रसविशेषरूप से समृद्ध हो। हे गृहस्थान! सुख एवं शान्ति की प्राप्ति हेतु मैं तुम्हारे शरण में आया हूँ। हमें ऐहिक एवं आमुष्मिक दोनों प्रकार का सुख प्राप्त हो। शिव का अर्थ है इस लोक का सुख तथा शग्म पारलौकिक सुख का वाचक है।

**म० :** त्र्यवसाना महापङ्क्तिः। यस्या अष्टार्णाः षट् पादाः सा महापङ्क्तिः। पञ्चमो नवमार्णस्तेनैकाधिका। इह गृहेषु गाव उपहूताः धेनवो बलीवर्दाश्च सुखेन तिष्ठनित्स्त्वेमनुज्ञाताः। यथा इह गृहेषु अजावयः उपहूताः अजात्वावित्यजातिद्वययुक्ताः पशव उपहूताः सुखेन वर्तन्तामित्य-स्माभिरनुज्ञाताः। अथो अपिच, अन्नस्य कीलालः अन्नसंबन्धी रसविशेषो नोऽस्मदीयेषु गृहेषु उपहूतः समृद्धो भवत्वित्येवमस्याभिरनुज्ञातः। अथो अपिच अन्नस्य कीलालः अन्नसंबन्धी रसविशेषो नोऽस्मदीयेषु गृहेषु उपहूतः समृद्धो भवत्वित्येवमस्याभिरनुज्ञातः। 'क्षेमाय व इति प्रविशति' (का० 4/12/23) इति। हे गृहाः, वो युष्मान् प्रपद्ये प्राप्नोमि। किमर्थम्। क्षेमाय विद्यमानस्य वसुनो रक्षणं क्षेमस्तदर्थम्। शान्त्यै मम सर्वानिष्टशमनाय। शंयोः शमिति सुखनाम (निघं० 3/6/19) तत्कामयते इति शंयुः। 'इदंयुरिदंकामयमानः' (निरु० 6/31) इति यास्कोक्तत्वात्तादृशस्य मम। शिवं शग्ममिति द्वे सुखनामनी (निघं० 3/6/18-22) तत्राद्यमैहिंकम् द्वितीयमामुष्मिकम्। उभयविधं सुखं भूतादिति शेषः। शंयोरित्यभ्यासोऽ-त्यादरार्थः ॥43॥

### इत्युपस्थानमन्त्राः पूर्णाः

## अथ चातुर्मास्यमन्त्राः

### चतुश्चत्वारिंशी

**प्रघासिनों हवामहे मरुतंश्च रिशादंसः। करम्भेणं सजोषंसः ॥४४॥**

**अन्वय :** वयं प्रघासिनो एतन्नामकान् मरुतो हवामहे। रिशादसः करम्भेण सजोषसः (मरुतो हवामहे)।

यहाँ से चातुर्मास्ययाग से सम्बन्धित मन्त्र प्रारम्भ हो रहे हैं।

**व्याख्या** : [चातुर्मास्य याग में चार पर्व होते हैं, वैश्वदेव, वरुण-प्रघास, साकमेध और शुनासीरीय। प्रस्तुतमन्त्र का विनियोग द्वितीयपर्व (वरुणप्रघास) में है।]

हम प्रघास रूप हविविशेष का भक्षण करनेवाले उन मरुद्गणों का आवाहन करते हैं जो हिंसकशत्रुओं का विनाश करनेवाले है तथा करम्भ (यवमयहविविशेष) जिन्हें अत्यन्त प्रिय है।]

**म०** : अथ चातुर्मास्यमन्त्राः प्रजापतिदृष्टाः। चातुर्मास्याख्यो यागः। स पर्वचतुष्टयात्मकः। वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि। तत्र तरुणप्रघासाख्ये द्वितीये पर्वणि दक्षिणोत्तरयोर्द्वयोर्वेद्योर्हविःष्वासादितेषु प्रतिप्रस्थाता पत्नीमुदानयंस्तदीयं जारं पृच्छेत् केन चरसीति। सापि तं ब्रूयात्। 'आख्याते प्रघासिन इत्येनां वाचयति नयन्' (का० 5/5/10) इति। पत्न्या जारे कथिते सति एनां पत्नीं नयन् प्रतिप्रस्थाता प्रघासिन इति मन्त्रं वाचयति। मारुती समुच्चयीन्ते। किंभूतान्मरुतः। प्रघासिनः 'घस्लृ अदने' प्रकर्षेण घस्यते भक्ष्यते इति प्रघासो हविर्विशेषः। स एषामस्तीति तान् प्रघासिनः एतन्नमकान्। शुक्रज्योतिरित्यादयः सप्तसप्तका मारुता गणाः। तत्र स्वतवांश्च प्रघासी चेति पठ्यते (अध्या० 17/85) प्रघास्युपलक्षितान् मरुतः आह्वयामः। पुनः किंभूतान्। रिशादसः रिशतिहिंसार्थः। रिशां वैरिकृतां हिंसां दस्यन्ति उपक्षयन्तीति रिशादसः। 'दसु उपक्षये' क्विप्। यद्वा रिशन्ति हिंसन्तीति रिशाः। 'इगुपध-' (पा० 3/1/135) इति कः। रिशान् हिंसकान् दस्यन्तीति रिशादसः। यद्वा रिशन्तीति रिशन्तः। शतरि दीर्घश्छान्दसः। रिशंतोऽऽस्यन्ति क्षिपन्ति ते रिशादसः। अस्तेविंच्। तथा करम्भेण सजोषसः यवमयो हविर्विशेषः करम्भः तेन सजोषसः समानप्रीतयस्तान् तथाविधान्मरुतो हवामहे ।।44।।

### पञ्चचत्वारिंशी

**यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा ।।४५।।**

**अन्वय** : वयं यद् एनः ग्रामे चकृम (कृतवन्तः)। यद् अरण्ये यत् सभायां, यद् इन्द्रिये चकृम। तद् इदम् अवयजामहे। (विनाशयामः)

**व्याख्या :** हम लोगों ने जो पाप [निषिद्धाचरण रूप कार्य] गाँव में रहते हुए किया है। मृगोपद्रवरूपपाप अरण्य (वन) में रहते हुए किया है, सभा मैं स्थित होकर हमने जो असत्यभाषण या गुरुजनों की (तिरस्कार) अवज्ञा रुप पाप किया है और जिह्वा तथा उपस्थ में प्रीतिमान होकर जो अश्राव्य श्रवण अभक्ष्य भक्षण, अगम्यागम्य आदिरुप पाप इन्द्रियों से किया है, इन सभी पापों को इस देवयजन द्वारा नष्ट करते है। यह हवि पापविनाशिनी देवता के निमित्त समर्पित है।

**म॰ :** मारुत्यनुष्टुप्। 'करम्भपात्राणि जुहोति शूर्पेण मूर्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखौ जायापती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा यद्ग्राम इति' (का॰ 5/5/11) इति। यवपिष्टेन निर्मितानि सन्तानपरिमितान्येकाधिकानि वर्तुलादिरूपाणि करम्भपात्राणि। तानि शूर्पेण पत्नी दक्षिणाग्नौ जुहुयादित्येकः पक्षः। दम्पती द्वौ वा जुहुयातामित्यपरः पक्षः। तौ च दक्षिणेन मार्गेण तानि पात्राण्याहृत्य वेदेः पूर्वदिशि पश्चिमदिशि वा स्थित्वा जुहुयाताम्। अथ मन्त्रार्थः। ग्रामे वसन्तो वयं यदेनः पापं ग्रामोपद्रवरूपं चकृम कृतवन्तः। तथारण्ये वसन्तो यदेनो मृगोपद्रवरूपं चकृम। तथा सभायां स्थिता यदेनो महाजनतिरस्कारादिकं चकृम। तथेन्द्रिये जिह्वोपस्थरूपे प्रीतिमन्तो वयं यदेनः कलञ्जभक्षणपरस्त्रीगमनादिकं चकृम। तथान्यत्रापि भृत्यस्वाम्यादौ यदेनः ताडनावज्ञादिकं चकृम। तदिदं सर्वं पापमवयजामहे विनाशयामः। अवपूर्णो यजिर्नाशनार्थः। स्वाहा एतद्धविर्देवतायै पापविनाशिन्यै दत्तम् ॥45॥

## षट्चत्वारिंशी

**मो षू णं इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः।**
**महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥४६॥**

**अन्वय :** हे शुष्मिन् इन्द्र! अत्र पृत्सु देवैः (मरुत्नामकैः देवैः सहितस्त्वं] नः मा (अस्मान् मा विनाशय) सु हि ते अवयाः (अवयुतोभागः) पृथग् अस्ति। अस्य मीढुषो यव्या होमक्रिया महश्चित् (पूजाखलु) मम गीः हविष्मतो तव मरुतः वन्दते। (नमस्करोति)

**व्याख्या :** हे बलशाली इन्द्र इन संग्रामों में मरुत्नामक देवताओं के साथ मैत्री को प्राप्त, आप हमारा लेशमात्र भी विनाश न करें, क्योंकि

आपका पृथक भाग रूप यह द्रव्य विद्यमान है। इस प्रकार विविध सुखों को प्रदान करने वाले इन्द्र के लिए, यवपूर्ण करम्भपात्रों) से की जाने वाली यह अर्चन (होम क्रिया) ही पूजा है। हमारी स्तुतिरुपावाणी हविर्ग्रहण करनेवाले (आपके साथ इन) मरुतों की भी वन्दना करती है।

**म० :** ऐन्द्रमरुद्देवत्या विराट्। यस्या दशाक्षराश्चत्वारः पादाः सा विराट्। चतुर्थ एकाधिकोऽत्र। 'मो षू ण इति यजमानो जपति' (का० 5/5/12) इति। पृत्स्विति संग्रामनाम (निघं० 2/11/21) हे इन्द्र, अत्र पृत्सु एषु संग्रामेषु वर्तमानः देवैस्त्वया सह सख्यं प्राप्तैर्मरुन्नामकैर्देवैः सहितस्त्वं नोऽस्मान्मो विनाशयेति शेषः। मोशब्दो निषेधार्थः। सुशब्दो विनाशभावस्य सौष्ठवं ब्रूते। तथा सति विनाशलेशो मा भूदित्यर्थः संपद्यते। क उपकारइति चेत्। शुष्मेति बलवन्निन्द्र, ते तव अवयाः अवयुतो यागः पृथग्भागोऽस्ति हि स्म विद्यत एव खलु। अवपूर्वस्य यजतेरेतन्द्रूपम्। 'मिह सेचने' धातुः। मीढुषो वृष्टिप्रदत्वेन सेक्तुः। हविष्मतो हविर्योग्यस्य तव यव्या यवमयैः करम्भपात्रैर्निष्पन्ना होमक्रिया महश्चित् पूजा खलु। तस्य यथोक्तपूजोपेतस्य तवास्मासु कृपालुत्वं युक्तमिति भावः। किंच गीरस्मदीया स्तुतिरूपा वाक् मरुतो भवतः सखीन् वन्दते नमस्कोति। नमो मरुभ्द्य इत्येवमाकारायाः स्तुतेर्नमस्काररूपत्वात्। मरुदिषयनमस्कारेणापि तुष्टस्य तव कृपैव युक्तेत्यर्थः। मो सु नः अत्र 'सुञः' (पा० 8/3/107) इति षत्वम्। 'अन्येषामपि दृश्यन्ते' (पा० 6/3/137) इति दीर्घः। 'नश्च धातुस्थोरुषुभ्यः (पा० 8/4/27) इति न इत्यस्य णः। स्म इत्यस्यापि 'पर्वूपदात्' (पा० 8/3/106) इति षत्वम्। 'अवयाः श्वेतवाः पुरोडाश्च' (पा० 8/2/67) इति विन्तो निपातः। मीढुषः। 'राश्वान्साह्वामीढ्वांश्च' (पा० 6/1/12) इति क्वसन्तो निपातः ॥46॥

## सप्तचत्वारिंशी

**अक्र॒न्कर्म॑ कर्म॒कृत॑ः स॒ह वा॒चा म॑यो॒भुवा॑। दे॒वेभ्य॒ः कर्म॑ कृ॒त्वास्त॒म्प्रेत॑ सचाभुवः ॥४७॥**

**अन्वय :** कर्मकृतः (ऋत्विजः) भयोभुवा वाचा (मन्त्ररुपस्तुत्या) सह कर्म अक्रन (कृतवन्तः। देवेभ्यः कर्मकृत्वा हे सचाभुवः अस्तम् प्रेत। (गृहान् गच्छत)

**व्याख्या :** वरुणप्रघासनामक याग कर्म करने वाले ऋत्विक् जनों ने मन्त्ररुप सुखदास्तुति के द्वारा इस कर्म को पूर्ण कर दिया हैं। देवताओं की प्रसननता के लिए इस कर्म को पूर्ण करके परस्पर में मिलकर कर्म करनेवाले हे ऋत्विकगण, आप अपने-अपने घर को जायें।

**म० :** आग्नेय्यनुष्टुप। 'अक्रन्कर्मेत्येनां वाचयति' (का० 5/5/13) इति। कर्मकृतः वरुणप्रघासाख्यकर्मकारिण ऋत्विजः वाचा स्तुतिरूपया सह कर्म वरुणप्रघासानुष्ठानरूपमक्रन् कृतवन्तः। कथंभूतया वाचा। मयोभुवा। मय इति सुखनाम (निघ० 3/6/7) मयो भवति यया सा मयोभूः तथा मन्त्ररूपस्तुत्येत्यर्थः। हे सचाभुवः, सचेति सहार्थेऽव्ययम्। सहभवनशीलाः परस्परं यजमानेन पत्न्या वास्मिन्कर्मणि सहावस्थिता हे ऋत्विजः, देवेभ्यो देवार्थ कर्म कृता वरुणप्रघासनामकं कर्मानुष्ठानायास्तं प्रेत गृहान् गच्छत। अस्तमिति गृहनाम (निघ० 3/4/5) ।।47।।

## अष्टचत्वारिंशी

**अवं॑भृथ निचुम्पुण निचे॒रुर॑सि निचुम्पुणः। अवं॑ दे॒वैर्दे॒वकृ॑त॒-मेनोऽयासिष॒मव॒ मर्त्यै॒र्मर्त्य॑कृतं पु॒रु॒राव्णों देव रि॒षस्पा॑हि ।।४८।।**

**अन्वय :** (हे) निचुम्पुण अवभृथ (यज्ञ), त्वं निचेरुः निचुम्पुणः श्च असि। (भव) देवैः (देवेषु) देवकृतम् एनः (पापम्) अवयाषिसम्। मर्त्यैः मनुष्यकृतैः मर्त्यकृतम् एनमवाशिषम्। हे देव! अव पुरुराव्णः रिषः (बन्धनात्) पाहि।

**व्याख्या :** वरुणप्रघास कर्म के अन्त में यह अवभृथकर्म किया जाता है। नदी में स्नान करते समय दम्यती यजमान कहते है-हे मन्दगामी अवभृथ (यज्ञान्तस्नानानुष्ठान) जल यद्यपि आप सर्वत्र गतिशील हैं फिर भी मन्दगति वाले ही रहैं, (जिससे हम) भलीभाँति स्नानादि सम्पन्न कर सकें) ज्ञानेन्द्रियों द्वारा जो देवसम्बन्धी मैंने पाप किया है उसे मैं इस अवमृथ स्नान से दूर करता हूँ। हमारे सहायक ऋत्विजों के द्वारा मनुष्यों के प्रति किये गये अवज्ञारुप (तिरस्कार) पाप को भी इस स्नान से दूर करता हूँ। हे दिव्यगुण गण सम्पन्न अवभृथ कर्म, दुःखप्रद कार्यों से आप हमारी रक्षा करें। [विरुद्ध-फल देने वाले बधादि से भी हमारी

रक्षा करें)।

**म०** : यज्ञदैवतं यजुः। 'मज्जयत्यवभृथेति' (का० 5/5/30) अत्र विनियोगश्चिन्त्य इति। वरुणप्रघासस्य कर्मणोऽन्ते तदङ्गभूतं यदवभृथाख्यं कर्म जलसमीपे क्रियतेऽत्रानेन मन्त्रेण दम्पतीभ्यां जले स्नानं कर्तव्यम्। हे अवभृथ, अवाचीनानि पात्राणि जलमध्ये भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽयमवभृथः। तत्संबोधनं हे अवभृथ यज्ञ, हे निचुम्पुण, 'चुप मन्दायां गतौ'। नितरां चोपति मन्दं गच्छति निचुम्पुणः। उण्प्रत्ययो मुमागमश्च। यद्वा नीचैरस्मिन्क्वणन्ति नीचशब्देन। कर्म कुर्वन्त्यवभृथो निचुम्पुणः। 'वीणस्थूणव्रणभ्रूण' इत्यादिना नीचैःशब्दोपपदात्क्वणतेः णक्प्रत्ययान्तो निपातः धातोः पुंभाव उपपदस्य निचुम्भावश्च निपातितः। तथाविधावभृथ, यद्यपि त्वं निचेरुरसि नितरां चरतीति निचेरुः नितरां गमनशीलोऽसि, तथाप्यत्र निचुम्पुणो भव मन्दगमनो भव। किं प्रयोजनमिति चेत् उच्यते। देवैर्द्योतनात्मकैरस्मदीयैदिग्निद्रियैर्देवकृतं हविःस्वामिषु देवेषु कृतमेनः पापं यदस्ति तदावयासिषस्मिन् जलेऽहमवनीतवानस्मि। तथा मर्त्यैः मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदप्यहमवायासिषमित्यनुवर्तते। इदमस्मत्त्यक्तं पापं यथा त्वां न व्याप्नोति तथा मन्दं गच्छेति भावः। किंच हे देवावभृथाख्य यज्ञ, रिशो वधात् पाहि पालय। रिषतेर्हिंसार्थस्य क्विवन्तस्य पञ्चम्यां रूपम्। किंभूताद्रिषः। पुरुराव्णः। 'रा दाने'। पुरु बहु विरुद्धं फलं ददातीति पुरुरावा तस्मात्। 'आतो मनिन्–' (पा० 3/2/74) इत्यादिना वनिप्। विरुद्धफलदायी बन्धस्त्व-त्प्रसादादस्माकं मा भूदित्यर्थः ।।48।।

### एकोनपञ्चाशी

**पू॒र्णा द॑र्वि॒ परा॑पत॒ सुपू॑र्णा॒ पुन॒राप॑त। व॒स्नेव॒ विक्री॑णावहा॒ इष॒मूर्ज॑ꣳ शतक्रतो ।।४९।।**

**अन्वय** : (हे) दर्वि! अन्नप्रदानसाधनभूते पूर्णापरापत इन्द्रं प्रति गच्छ पुनः सुपूर्णा आपत अस्मान् प्रतिआगच्छ। हे शतक्रतो! वस्नेव (मूल्येन) विक्रीणावहै इषम् ऊर्ज्जम्।

**व्याख्या** : हे दर्वि! (ओदनरूपहविप्रदान के साधनभूत, काष्ठ से निर्मित) तुम इस (स्थाली से) हवि को लेकर (घृतादिहवि से पूर्ण

होकर) इन्द्र को प्रदान करो। तथा मेरे अभीष्ट (कर्मफल) से पूर्ण होकर पुनः हमें प्राप्त होंओं। हे अनन्तसामर्थ्यवाले इन्द्र! मूल्यवान् पण्यद्रव्यों की भाँति हम दोनों परस्पर में विनिमय करें। अर्थात् मैं आपको हवि प्रदान करूँ तथा आप हमें फल प्रदान करें। वरुणप्रघासकर्म के अनन्तर साकमेधपर्व के कुछ कर्मो का विवेचन किया जा रहा है। हवि यहाँ ओदन है।

**म० :** द्वे ऐन्द्र्यावनुष्टुभौ। साकमेधगतं कर्म किंचिदुच्यते। :स्थाल्याः दर्व्यादत्ते पूर्णा दर्वीति' (का० 5/6/34) दर्व्या स्थालीत ओदनग्रहणं करोति प्रथमया। द्वितीयया तं जुहोति। हे दर्वि, अन्नप्रदानसाधनभूते काष्ठादिनिर्मिते, त्वं पूर्णा स्थाल्याः सकाशादन्नं गृहीत्वा पूर्णो भूत्वा परा पूर्णत्वादेवोत्कृष्टा सती पत इन्द्रं प्रति गच्छ। सुपूर्णा कर्मफलेन सुष्टु पूर्णा सती पुनरापत भूयोऽस्मान्प्रत्यागच्छ। एवं दर्वीमुक्त्वा इन्द्रमाह। हे शतक्रतो बहुकर्मन् इन्द्र, त्वं चाहं चोभौ वस्नेव 'वस्नशब्देन मूल्यं तृतीयायाः पूर्वसवर्णः'। मूल्येनेव। इषमभीष्टं हविःस्वरूपमन्नमूर्जं हविर्दानफलरूपं रसविशेषं च विक्रीणावहै परस्परं द्रव्यविनियमरूपं विक्रयं करवावहै। अहं तुभ्यं हविर्ददामि त्वं मह्यं फलं देहीत्यर्थः ।।49।।

### पञ्चाशी

**दे॒हि मे॒ ददा॑मि ते॒ नि मे॑ धेहि॒ नि ते॑ दधे। नि॒हार॑ च॒ हरा॑सि मे नि॒हार॒न्निह॑राणि ते॒ स्वाहा॑ ।।५०।।**

**अन्वय :** इन्द्रोब्रूते (हे यजमान) त्व मे मह्यं हवि, देहि अपेक्षितं पश्चात् ते ददामि। मे निधेहि (यजमान आह) ते निदधे, निहारञ्च फलं मे हरासि (प्रयच्छ) ते निहारं (मूल्यभूतं हविः) निहराणि समर्पयामि स्वाहा।

**व्याख्या :** (इन्द्र कहते हैं) हे यजमान सर्वप्रथम तुम मुझे हवि प्रदान करो मैं तुम्हें फल प्रदान करूँगा। पहले मेरे लिए हवि प्रदान करो। इसके पश्चात् अपेक्षित फल तुम्हें दूँगा। यदि तुम पूर्णमूल्यवाले इस हवि को मेरे लिए अर्पण करोगे तो मैं अपनी कृपा द्वारा इसका पूरामूल्य तुम्हें प्रदान करूँगा। यह आहुति सुहुत हो। इन्द्र के वाक्य को यजमान भी कहता है—कि हमें आपकी शर्त मंजूर है। फल आप दे हवि मैं दूँगा।

[मन्त्र का भाव यह है कि सृष्टि का समस्त जीवन देहि, और ददामि की पारस्परिक विनियम की भावना पर आधारित है, यहाँ तक कि जड़ रूप मिट्टी में भी बीजरुप अन्न डालने पर ही वह अन्न दुगनाकर) करके देती है। जैसा कि गीताकार ने भी कहा है–

देवान् भावयतानेन ते देवा भावयन्तु वः!

परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। गी.–3–11

**म॰ :** 'देहि म इति जुहोतीति' (का॰ 5/6/38)। इन्द्रो वदति। हे यजमान, त्वं मे मह्यमिन्द्राय देहि हविः प्रथमं प्रयच्छ। ते तुभ्यं यजमानाय ददामि। अपेक्षितं पश्चात्प्रयच्छामि। एवं प्रथमपादोक्त एवार्थो द्वितीयपादेनादरार्थं पुनरुच्यते। मे मह्यम्निद्राय निधेहि प्रथमं त्वं हविर्नितरां संपादय। ते तुभ्यं यजमानाय निदधे अपेक्षितं फलं नितरां संपादयामि। एवमिन्द्रवाक्यं श्रुत्वोत्तरार्धेन यजमान आह। नितरां ह्रियत इति निहारो मूल्येन क्रेतव्यं पदार्थं ब्रूते। निहारं मूल्येन क्रेतव्यवस्तुरूपं फलं मे मह्यं यजमानाय हरासि प्रयच्छ। 'लेटोऽडाटौ' (पा॰ 3/4/94) इत्याडागमः। उत्तरो निहारो मूल्यवाची। निहारं मूल्यभूतं हविः ते तुभ्यमिन्द्राय निहराणि नितरां समर्पयामि। स्वाहाशब्दो हविर्दानार्थः। पूर्वार्धे पादद्वयेनादरेणेन्द्रेण द्विवारं प्रोक्तमर्थमुत्तरार्धेन यजमानः सम्यगङ्गी-करोतीत्यर्थः ।।50।।

## एकपञ्चाशी

**अक्षन्नमीमदन्त ह्यव प्रियाऽअधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ।।५१।।**

**अन्वय :** अक्षन भुक्तवन्तो पितरो हि अमीमदन्त (हर्षप्राप्ताः) प्रियाः अव अधूषत (शिरकम्पितवन्तः)। स्वभानवो विप्राः नविष्ठयामतीः अस्तोषत। (हे) इन्द्र ते हरी (अश्वौ) नु रथे आयोजय।

**व्याख्या :** इस साकमेधगत पितृयज्ञनामक कर्म में जो मेरे पितर हैं, वे हमारे द्वारा प्रदत्त हविरुपअन्न का भक्षण कर लिए हैं। क्योंकि प्रसन्नता से वे अपने (शिर) को कंपित (हिला) कर रहे हैं। दिव्यतेज सम्पन्न मेधावी विप्रगण अपनी श्रद्धायुक्त वैदिकमन्त्रों द्वारा स्तुति कर रहे

है। हे इन्द्र (पितरों के तृप्त होने पर उन्हीं के साथ जाने के लिए आप हरितवर्णवाले दोनोंअश्वों को अपने रथ में नियुक्त करें।

**म० :** ऐन्द्रीभ्यां पङ्क्तिभ्यां साकमेधगतपितृयज्ञाख्यकर्मणि आहवनीयोपस्थानम्। यस्या अष्टाक्षराः पञ्च पादाः सा पङ्क्तिः। 'यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमनदन्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्यामिति' (का० 5/9/21) पितृयज्ञाख्ये कर्मणि ये पितरः सन्ति तेऽस्माभिर्दत्तं हविस्वरूपमन्नं भक्षितवन्तः। हि यस्मात्। अमीमदन्त हर्षं प्राप्ताः। अस्मदीयां भक्तिमवगम्य प्रियाः प्रीतियुक्ताः सन्तः अधूषत स्वकीयं शिरः कम्पितवन्तः। यद्वा प्रियास्तनूरवाधूषत। किंच स्वभानवः स्वयं दीप्तियुक्ताः विप्राः मेधाविनः सन्तः नविष्ठया नवतमया मती मत्या बुध युक्ताः अस्तोषत स्तुतिं कृतवन्तः। अहो स्वाद्वन्नं बहु दत्तमहो भक्तिरित्याद्यभिधानं स्तुतिः। अतो हे इन्द्र, नु क्षिप्रं ते तव हरी एतन्नामकौ हरितवर्णावश्वौ योज गमनाय रथे योजय। तवाभीष्टायाः पितृतृप्तेः संपन्नत्वात्तैः पितृभिः सह त्वया आगन्तव्यमित्यर्थः। अक्षन्। अदेर्लुङि 'लुङ्सनोर्घस्लृ' (पा० 2/4/37) इति घस्लादेशः। 'मन्त्रे घस–' (पा० 2/4/80; इत्यादिना च्लेर्लुक्। 'गमहन–' (पा० 6/9/67) इत्युपधालोपः। 'खरि च' (पा० 8/3/60) इति षत्वम्। अडागमः। अमीमदन्त 'मद तृपितयोगे' चुरादिरात्मनेपदी लुङि णिलोपादौ रूपम्। अधूषत 'धूञ् कम्पने' लुङि सिचि व्यत्ययेन गुणाभावः। मती 'सुपां सुलुक्' (पा० 7/1/39) इति तृतीयायाः पूर्वसवर्णदीर्घः। योज 'युजिर् योगे' ण्यन्ताल्लोटि 'छन्दस्युभयथा' (पा० 3/4/117) इति शप आर्धधातुकत्वा 'णेरनिटि' (पा० 6/4/51) इति णिलोपः। 'द्व्यचोऽतस्तिङः' (पा० 6/3/135) इति संहितायां दीर्घः ॥51॥

### द्विपञ्चाशी

**सुसंदृशंन्त्वा वयं मघवन्वन्दिषीमहिं। प्र नूनं पूर्णबंन्धुरस्तुतो यांसि वशाँ अनु योजा न्विन्द्र ते हरीं ॥५२॥**

**अन्वय :** (हे) मघवन् वयं सुसन्दृशं त्वा (त्वां) वन्दिषीमहि त्वं स्तुतः सन् नूनं वशान् अनु प्रयासि। पूर्णबन्धुर हे इन्द्र! ते हरी नु आयोज।

**व्याख्या :** हे धनवान् (ऐश्वर्यशाली) इन्द्र! हमलोग शोभनदर्शनवाले

(कृपामयी शोभनदृष्टि से सबको देखने वाले) आपको प्रणाम करते हैं। इस प्रकार हमारे द्वारा स्तुत होकर आप कामनावालों (यजमानों) के पास (उनकी इच्छा पूर्ण करने के लिए) धनपूर्णरथ के साथ अवश्य जाते हैं। हे इन्द्रदेव अपने घोड़ों को गमनार्थ रथ में नियुक्त करें।

**म॰ :** हे मघवन्, वयं त्वा त्वां वन्दिषीमहि स्तुतिकर्तारो भूयास्मेत्याशास्यते। किंभूतं त्वाम्। सुसंदृशं सुष्टु सम्यक् पश्यति सुसंदृक् तं शोभनदर्शनम्। अनुग्रहदृष्टया सर्वस्य द्रष्टारम्। इत्थमस्माभिः स्तुतः त्वं वशान् कामयमानान् यजमानाननुलक्षीकृत्य नूनं प्रयासि अवश्यं गच्छसि। किंभूतः। पूर्णबन्धुरः। बन्धुरशब्दो रथनीडवाची। स्तोतृभ्यो देयैर्धनैः संपूर्णरथनीडोपेतो भूत्वा गच्छसि। हे इन्द्र, स त्वं ते हरी योजेति पूर्ववत् ।।52।।

### त्रिपञ्चाशी

**मनो न्वाह्वामहे नाराशंसेन स्तोमेन। पितृणां च मन्मभिः ।।५३।।**

**अन्वय :** वयं नाराशंसेन स्तोमेन च पितृणां मन्मभिः नु मनः आह्वामहे।

**व्याख्या :** नाराशंस [विशिष्ट पुरुषों की प्रशंसा करने वाले स्त्रोत्रो से] तथा पितर जिन स्तोत्रों से सादर आहूत होते हैं (प्रसन्न होते हैं) उन स्तोत्रों से हम शीघ्र ही मनो देवता (मनोऽधिष्ठात्री देवता) का आवाहन करते है।

**म॰ :** तिस्र ऋचो मनोदेवत्या गायत्र्यो बन्धुदृष्टाः। 'मनोन्वाह्वामह इति गार्हपत्यं तिसृभिरिति' (का॰ 5/9/22)। उपतिष्ठन्त इत्यनुवर्तते। नु क्षिप्रं मन आह्वामहे पितृयज्ञानुष्ठानेन चित्तं पितृलोकं गतमिवासीत् अत आहूयते। यद्वा मनः मनोऽभिमानि दैवतमाह्वामहे आह्वयामः। केन साधनेन। स्तोमेन स्तोत्रेण। कथंभूतेन। नाराशंसेन। शंसः प्रशंसनं नराणां मनुष्याणां योग्यः शंसो नराशंसः तत्संबधी नाराशंसस्तेन। स्तोत्रं द्विविधं दैवं मानुषं च। यत्र देवाः स्तूयन्ते तदैवम्। यत्र च मनुष्याः प्रशस्यन्ते तन्मानुषम्। तथाविधेन स्तोत्रेणेत्युक्तं भवति। किंच पितृणां च मन्मभिः पितरो यैः स्तोत्रैर्मन्यन्ते ते मन्मानस्तैः तादृशैः स्तोत्रैराह्वयामः ।।53।।

## चतुःपञ्चाशी

**आ नंऽएतु पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्यन्दृशे ।।५४।।**

**अन्वय :** नः मनः पुनः क्रत्वे आ एतु दक्षाय जीवसे ज्योक् च सूर्यं दृशे।

**व्याख्या :** हमारा मन फिर से यज्ञादि के शुभ संकल्पों को प्राप्त करने के लिए उत्साहपूर्वक हमारे पास आ जाय। कुशलता पूर्वक दीर्घ जीवन धारण के लिए तथाचिरकाल तक सर्वप्रेरक सूर्य को देखने के लिए यह मन हमें प्राप्त हो।

**म॰ :** नोऽस्माकं मनः पूर्वोक्तं चित्तं पुनर्भूयः आ एतु आगच्छतु। किमर्थम्। क्रत्वे ऋतवे सङ्कल्पाय यज्ञं सङ्कल्पयितुं दक्षाय कर्मण्युत्साहाय। तथाच श्रुतिः 'तदेव मनसा कामयत इदं मे स्यादिदं कुर्वीयेति स एव ऋतुरथ यदस्मै तत्समृध्यते स दक्षः' इति। ज्योगिति निपातश्चिरवचनः। ज्योग्जीवसे चिरं जीवितुम्। सूर्यं दृशे च चिरकालं सूर्यमवलोकयितुं च। एतेषां सङ्कल्पादीनां सिद्धये मनः पुनरागच्छतु। क्रत्वे। गुणाभावाद्यणादेशः। जीवसे तुमर्थे असेप्रत्ययः। दृशे। 'दृशे विख्ये च' (पा॰ 3/4/11) इति साधुः ।।54।।

## पञ्चपञ्चाशी

**पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातंꣳ सचेमहि ।।५५।।**

**अन्वय :** (हे) पितरः दैव्यो जनः नः मनः पुनः ददातु। जीवं व्रातं सचेमहि। (सेवेमहि)

**व्याख्या :** हे पितरों! दिव्यगुणगणसम्पन्न आचार्य आदि महनीय पुरुष हमारे मन को पुनः शुभकर्मों को करने के लिए प्रेरित करें। ऐसा होने पर आपकी कृपा से सुन्दर जीवनयुक्त पुत्रपशवादिआत्मीय जनों की सेवा करूँ।

**म॰ :** हे पितरः, भवदनुज्ञया दैव्योजनो देवसंबन्धी पुरुषः नोऽस्मभ्यं मनः पूर्वोक्तं चित्तं पुनर्भूया ददातु प्रयच्छतु। प्रेरयत्वित्यर्थः। तथा सत्यनुष्ठानं

कृत्वा भवत्प्रसादाजीवं जीवनवन्तं व्रातं पुत्रपश्वादिकं गणं वयं सचेमहि सेवेमहि। सचतिः सेवनार्थः ।।55।।

### षट्पञ्चाशी

**वयꣳसोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचमेहि ।।५६।।**

**अन्वय :** (हे) सोम! वयं यजमाना तव व्रते (कर्मणि) तनूषु मनः बिभ्रतः प्रजावन्तः सचेमहि।

**व्याख्या :** हे सोमदेव हम आपके उपासकजन आपके कर्म में संलग्न होकर जाग्रत, स्वप्न सषुप्ति, तीनोंदशाओं में मन लगाकर पुत्र पौत्रादि से सम्पन्न होकर सुखोपभोग करें।

**म० :** सोमदेवत्या गायत्री जपे विनियुक्ता। अत्र पितृयज्ञे सोमनामको देवोऽस्ति। सोमायपितृमते इत्येवं हविषो विहितत्वात्। हे सोम, वयं यजमानाः तव व्रते कर्मणि वर्तमानाः तनूषु भवच्छरीरेषु मनो बिभ्रतः अस्मदीयं चित्तं धारयन्त त्वत्कारुण्यात् प्रजावन्तः पुत्रपौत्रादिसंपन्नाः सन्तः सचेमहि सेवेमहि सेवितव्यानि वस्तूनीति शेषः। यद्वा 'षच संबन्धे' सर्वदा त्वत्संबद्धा भवेम ।।56।।

### सप्तपञ्चाशी

**एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहैष ते रुद्र भाग आखुस्ते पशुः ।।५७।।**

**अन्वय :** (हे) रुद्र! एष ते भागः स्वस्रा अम्बिकया सह वर्तते तं जुषस्व स्वाहा। (हे) रुद्र एष ते भागः, ते पशुः आखुः (अस्ति)।

**व्याख्या :** हे रुद्र यह यज्ञभाग पुराडाश आपके लिए है। अपनी भगिनी या (आत्मानुसारिणी) अम्बिका के सहित इसे सेवन करें, यह आपको सन्तुष्ट करें। हे रुद्र यह आपका भाग है और आपका पशु चूहा है। इसके लिए भी यह हवि है। पौराणिक दृष्टि से रुद्र संहारक है। समर्थ होते हुए भी अपनी भगिनी अम्बिका (दुर्गा) से ही दैत्यों का संहार कराते है। इससे ज्ञात होता है कि दुर्गा सप्तशती का वैदिक बीज स्वरूप यह मंत्र है। भाष्य में शरत्काल का भी वर्णन है जो 'शरत्काले महापूजा'

का परिचायक है।

क—स्वं=आत्मानं सरति भजते इति स्वसा देहार्धभूता पृषोदरादित्वात् सुष्ठु वा आत्मना अस्यते प्राप्यते इति स्वसा। यद्वा—स्वसृत्वेक सहजत्वं लक्ष्यते तेन चाविनाभाव तेन चाविनाभावः—तै स भटट्भाष्कर 1-8-6-1

इस प्रकार स्वसाशब्द केवल भगिनी का ही वाचक नहीं है अपितु उमा पार्वती आदि का भी वाचक है। अतः भगवान शिव की दिव्य शक्ति दुर्गा ही स्वसाशब्द से कही गई है।

**म॰ :** द्वे रौद्रे यजुषी विंशत्यक्षरद्वादशाक्षरे। साकमेधगतत्र्यम्बकहविर्विषया मन्त्रा उच्यन्ते। प्रथमस्य यजुषोऽवदानहोमे विनियोगः। तथाच 'एष त इति जुहोतीति' (का॰ 5/10/12)। रोदयति विरोधिनां शतमिति रुद्रः। हे रुद्र, ते तव स्वस्रा भगिन्या अम्बिकया अम्बिकानाम्न्या सह एषो—स्माभिदीयमानः पुरोडाशः भागः भजनीयः स्वीकर्तृं योग्यः। तं तथाविधं पुरोडाशः भागः भजनीयः स्वीकर्तु योग्यः। तं तथाविधं पुरोडाशं त्वं जुषस्व सेवस्व। स्वाहा इदं हविर्दत्तं सुहुतमस्तु। अम्बिकाया रुद्रभगिनीत्वं श्रुत्योक्तम्। 'अम्बिका ह वै नामाख्यस्वसा तयास्यैष सह भागः' (2/6/2/9) इति। योऽयं रुद्राख्यः क्रूरो देवस्तस्य विरोधिनं हन्तुमिच्छा भवति तदानया भगिन्या क्रूरदेवतया साधनभूतया तं हिनस्ति। सा चाम्बिका शरद्रूपं प्राप्य जरादिकमुत्पाद्य तं विरोधिनं हन्ति। रुद्राम्बिकयोरुग्रत्वमनेन हविषा शान्तं भवति। तथाच तित्तिरिः। 'एष ते रुद्र भागः सह सह स्वस्राम्बिकयेत्याह शरद्वा आम्बिका सा भिया एषा हिनस्ति यꣳ हिनस्ति तयैवैनꣳ सह शमयति'। 'अतिरिक्तमाखूत्कर उपकिरत्येष त इतीति' (का॰ 5/10/13) इति। यजमानस्य यावन्तः पुत्रभृत्यादयः पुरुषाः सन्ति तान् गणयित्वा प्रतिपुरुषमेकैकः पुरोडाश इत्येतावतः पुरोडाशान्निप्य ततोऽप्यधिकमेकं पुरोडाशं निर्वपेत् सोऽयमतिरिक्त उच्यते। 'त्रैयम्बकान्निर्वपति रौद्रानेककपालान्यावन्तो यजमानगृह्या एकाधिकान्' (5/10/1/2) इति कात्यायनोक्तेः। तत्र योऽयमतिरिक्तस्तं न जुहुयात् किंतु मूषकोत्खाते एष त इति मन्त्रोणोपकिरेत्। अथ मन्त्रार्थः। हे रुद्र, एषोऽस्माभिरुपकीर्यमाणोऽतिरिक्तः पुरोडाशः ते भागः त्वया भजनीयः। तथा ते तवाखुः पशुः मूषकः पशुत्वेन समर्पितः। आखुदानेन तुष्टो रुद्रस्तयाम्बिकया यजमानपशून्न मारयतीत्यर्थः ।।57।।

## अष्टपञ्चाशी

**अवं रुद्रमंदीमह्यवं देवन्त्र्यम्बकम्। यथां नो वस्यंसस्करद्यथां नः श्रेयंसस्करद्यथां नो व्यवसाययांत् ।।५८।।**

**अन्वय :** (वयं) रुद्रम् (त्र्यम्बकं) देवम् अव (ज्ञात्वा) अदीमहि अन्नं भक्षयेम। यथा नः वस्यसस्करद् यथा नः श्रेयसस्करद् यथा नः व्यवसाययात्।

**व्याख्या :** पापियों को रुलाने वाले त्रिनेत्रधारी दिव्यगुणगण सम्पन्नभगवानशिव के स्वरूप को जानकर (हम) उनके लिए यज्ञ-भाग प्रदान करते है अथवा उनको समर्पण करके हम अन्न का भक्षण करते हैं। जिनकी कृपा से हमारा निवास स्थान उत्तम हो, हमें कल्याण प्राप्त हो और हमारे कार्यों में सफलता प्राप्त हो।

**म० :** द्वे रौद्रयौ पङ्क्तिककुभौ। यस्या द्वितीयः पादः द्वादशाक्षरः प्रथमतृतीयावष्टाक्षरौ सा ककुप्। द्वयोर्जपे विनियोगः। तथा 'आगम्याव रुद्रमदीमहीति जपतीति' (का० 5/10/14) रुद्रमव। असौ रुद्र इति मनसा तमवगत्यादीमहि त्वदनुग्रहादन्नं भक्षयेम। तथा त्रयम्बकं त्रीण्यम्बकानि नेत्राणि यस्य तादृशं देवमव त्रिनेत्रोऽयं देव इति मनसावगत्यादीपमतीत्यनुवर्तते। यद्वा अदीमहीत्यत्र णिचो लोपश्छान्दसः। अवयुत्यान्यवेवताभ्यः पृथक्कृत्य रुद्रमदीमहि आदयामो भोजयामः। अवगम्य ज्ञात्वा त्र्यम्बकमादयाम इति। यथा येन प्रकारेण नोऽस्मान्वस्यसः करत् वस्तृतरान् वसनशीलानसौ कुर्यात्। यथाच नोऽस्मान् श्रेयसः करत् ज्ञातिषु प्रशस्यतरान् कुर्यात्। यथा चास्मान् व्यवसाययात् सर्वेषु कार्येषु निश्चययुक्तान् कुर्यात्तथैनं जपाम इत्यर्थः। आशीरियम्। अदीमहि 'छन्दस्युभयथा' इत्यार्धधातुकत्वाल्लिङि णिचो लोपः (पा० 3/4/117)। वस्यसः वसतीति वस्ता तृन् अतिशयेन वस्ता वसीयान्। 'तुश्छन्दसि' (पा० 5/3/59) इति ईयसुनि कृति 'तुरिष्ठेमेयःसु' (पा० 6/4/154) इति लङ्। विकरणव्यत्ययेन शपि गुणः। 'बहुलं छन्दस्यमाड-योगेऽपि' (पा० 6/4/75) इत्यडभावः। व्यवसाययात् लेटि आडगमे 'इतश्च लोपः परस्मैपदेषु' (पा० 3/4/97) इति इलोपे रूपं विपूर्वस्य ण्यन्तस्य स्यतेः ।।58।।

## एकोनषष्टी

**भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम्। सुखं मेषाय मेष्यै ॥५९॥**

**अन्वय :** (हे रुद्र) त्वं भेषजमसि, गवे अश्वाय पुरुषाय भेषजं मेषाय मेष्यै सुखं भवसि।

**व्याख्या :** हे रुद्र आप समस्त प्राणियों के लिए भेषज रुप है। अर्थात् संसारामय के लिए आप दिव्य औषध है। अतः हमारे गौ, अश्व तथा कुटुम्बीजनों के हितार्थ सर्वव्याधि-निवारक औषधि प्रदान करें। तथा हमारे मेंष और मेषी को भी सुख प्रदान करें। (इस मन्त्र के पाठ से गृहपशुओं को क्षेम की प्राप्ति होती है।

"संसारामय भेषजंसुखकरम्"

**म॰ :** हे रुद्र, त्वं भेषजमसि औषधवत्सर्वोपद्रवनिवारकोऽसि। अतोऽस्मदीयेभ्यो गवे अश्वाय पुरुषाय च भैषज्यं सर्वव्याधिनिवारकमौषधं देहि। मेषाय मेष्यै च सुखं देहि। सु हितं खेभ्यः प्राणेभ्य इति सुखम्। अनेन मन्त्रेण गृहपशूनां क्षेमप्राप्तिर्भवति ॥59॥

**षष्टी**

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्। त्र्यम्बकं यजामहे सुगन्धि पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥६०॥**

**अन्वय :** सुगन्धिं पुष्टिवर्धनं त्र्यम्बकं वयं यजामहे। बन्धनात् उर्वारुकम् इव मृत्योः मुक्षीय मा अमृतात। सुगन्धिं पतिवेदनं त्र्यम्बकं यजामहे। बन्धनात् उर्वारुकम् इव इतः मुक्षीय अमुतः मा।

**व्याख्या :** अपने गुण एवं कीर्ति की गन्ध से त्रिलोक को सुवासित करने वाले धनधान्यादि की समृद्धि करने वाले नेत्रत्रय (सूर्य शशाङ्क वह्नि) सम्पन्न श्री शंकर (रुद्र) की अर्चना करता हूँ। जिस प्रकार पका हुआ कर्कटी फल (तरबुजा) लताआदि के बन्धन से स्वयं मुक्त हो जाता है, उसी प्रकार रुद्रदेव हमें मृत्यु के बन्धन से मुक्त करें। परन्तु मैं अभ्युदय एवं निःश्रेयस, रुप फल से कभी मुक्त न होऊँ। (यजमान की कुमारिका कहती है] दिव्यगंधोपेत (दिव्य यश सौरभसम्पन्न)

एवं सुन्दर पति को प्राप्त कराने वाले भगवान् शिव का यजन करती हूँ। जैसे शाखा आदि के बन्धन से खरबूजे को सरलता से पृथक किया जाता है वैसे ही रुद्रदेव मुझे यहाँ पितृकूल (पिता के घर) से मुक्त कराये परन्तु उस श्वसुर कुल (पति घर) से नहीं। अर्थात् हम मातृपितृ भ्रातृवर्ग से यथा समय अवश्य मुक्त हो जाऊँ पर विवाहान्तरं होने वाले पति से हम वियुक्त न हों।

व्याहतियों के साथ यह प्रसिद्ध महामृत्युञ्जयमन्त्र सभी अनिष्टों को दूर करता है। इसके जप से सुन्दरपति की प्राप्ति होती है।

**म॰** : द्वे अनुष्टुभौ 'अग्नि त्रिः परियन्ति पितृवत्सव्योरूनाघ्नाना-स्त्र्यम्बकमिति देववच्चैतेनैव दक्षिणानाघ्नानाः' (का॰ 5/10/15/16) इति। यथा पितृमेधे पुत्रादयः पुरुषाः स्वकीयान् वनोरूंस्ताडयन्तस्त्रिवारमद्रदक्षिणं परियन्तिः। यथा च देवतासेवायां दक्षिणोरूंस्ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति। एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः ।। मन्त्रार्थस्तु। सुगन्धिं दिव्यगन्धोपेतं मर्त्यधर्महीनं पुष्टिवर्धनं धनधान्यादिपुष्टेर्वर्धयितारं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः। ततो रुद्रप्रसादान्मृत्योर्मुक्षीय अपमृत्योः संसारमृत्योश्च मुक्तो भूयासम्। अमृतान्मा मुक्षीय स्वर्गरूपान्मुक्तिरूपाच्चमृतान्मा मुक्षीय मुक्तो मा भूयासम्। एकवचनं बह्वर्थे। मुक्ता मा भूयास्मेत्यर्थः। अभ्युदयनिःश्रेयसरूपा-त्फलद्वयान्मम भ्रंषो मा भूदित्यर्थः। मृत्योर्मोचने दृष्टान्तः—उर्वारुकमिव बन्धनादिति। यथोर्वारुकं कर्कन्ध्वादेः फलमत्यन्तपक्कं सत् बन्धनात् स्वस्य वृन्तात् प्रमुच्यते तद्वत् ।। 'कुमार्यश्चोत्तेरेणेति' (का॰ 5/10/17)। यजमानसंबन्धिन्यः कुमार्योऽपि पूर्वोक्तपुरुषवदुत्तरेण त्र्यम्बकमन्त्रेणाग्निं त्रिः परियन्ति। त्र्यम्बकं यजामहे। कीदृशम्। पतिवेदनं पति वेदयतीति तं भर्तुर्लम्भयितारं 'विद्लृ लाभे'। अन्यत्पूर्ववत्। इतो मुक्षीय इतो मातृपितृभ्रातृवर्गान्मुक्षीय युक्ता भूयासममुतो मा मुक्षीय विवाहादूर्ध्वं भविष्यतः पत्युर्मुक्ता मा भूयासम्। जनकस्य गोत्रं गृहं च परित्यज्य पत्युर्गोत्रे गृहे च सर्वदा त्र्यम्बकप्रसादाद्वसामीत्यर्थः। 'सा यदि त इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति' (2/6/2/14) इति श्रुतेरितोऽमुतःशब्दाभ्यां पितृपतिवर्गौ ग्राह्यौ ।।60।।

## एकषष्टी

**एतत्तें रुद्राऽवसन्तेनं पुरो मूजंवतोऽतींहि। अवंततधन्वा पिनांकावसः कृत्तिंवासाऽअहिंꣳसन्नः शिवोऽतींहि ।।६१।।**

**अन्वय :** (हे) रुद्र! एतत् ते अवसम् (भोज्यं) तेन अवततध न्वा पिनाकावसः मूजवतः पर अतीहि। कृतिवासाः न अहिंसन् शिवः अतीहि।

**व्याख्या :** हे रुद्रदेव यह आपका पाथेय है। (मार्ग में किया जाने वाला भोजन) इसके साथ आप उतरी हुई डोरी युक्त धनुषवाले अर्थात् विश्रान्तिमुद्रा में होकर पिनाक (धनुष) को वस्त्र से वेष्टित (ढककर) करते हुए मूज्जवान्पर्वत पर चले जाइये। (हे रुद्रदेव) (गज) चर्माम्बर धारण करने वाले, हमारी इच्छापूर्ण करते हुए पूजादि से सन्तुष्ट होकर पर्वत का अतिक्रमण करके अपने निवास स्थान को जाइए।

**म॰ :** रौद्यास्तारपङ्क्तिः। यस्या अन्त्यौ द्वादशाक्षरावाद्यावष्टाक्षरौ पादौ सास्तारपङ्क्तिः। 'मूतयोः कृत्वा वेणुयष्ट्यां वा कूपे वासज्योभयतः स्थाणुवृक्षवꣳशवल्मीकानामन्यतमिस्मन्नुत्क्षेपणवदासजत्येतत्त दतीति' (का॰ 5/10/21)। ब्रीहियवादीन् बद्ध्वा वहनार्थ तृणवंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते। तयोरुभयोर्मूतयोस्त्र्यम्बकान् हविःशेषान् प्रक्षिप्य स्वकीयेनांसेन वोढुं शक्यायां वंशयष्टयामग्रद्वये तन्मूतद्वयमवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंशयष्टिं संसृजति। ततो गोभिराघ्रातुमशक्यत्वाद्गावो रोगं न प्राप्नुवन्तीत्यर्थः ।। अथ मन्त्रार्थः। मूजवान्नाम कश्चित्पर्वतो रुद्रस्य वासस्थानम्। अवसशब्देन देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्य ओदनविशेष उच्यते। हे रुद्र, एतत्ते तव अवसं हविःशेषाख्यं भोज्यं तेन सहितस्त्वं मूजवतः पर्वतात्परः परभागवर्ती सन्नतीहि अतिक्रम्य गच्छे। कीदृशस्त्वम्। अवततधन्या अवरोतिपधनुष्कः। अस्मद्विरोधिनां त्वया निवारितत्वादित ऊर्ध्वं धनुषि ज्यासमारोपणस्य प्रयोजनाभावादवरोपणमेवादानीं युक्तम्। तथा पिनाकावसः पिनाकाख्यं त्वदीयं धनुरावस्ते सर्वत आच्छादयतीति पिनाकावसः। यथा धनुर्दृष्ट्वा प्राणिनो न बिभ्यति तथा त्वदीयं ध नुर्वस्त्रादिना प्रच्छाद्य गच्छेत्यर्थः। 'कृत्तिवासा इत्यनवेक्षमेत्योपस्पृशन्त्यपः' (का॰ 5/10/22-23)। इति। उन्नते वृक्षादौ मूतद्वयेऽवसज्य प्रत्यावर्तमाना

मूतद्वयस्यावेक्षणमकृत्वा वेदिसमीपे समागत्योदकं स्पृशेयुरिति सूत्रार्थः। मन्त्रार्थस्तु हे रुद्र, त्वं कृत्तिवासाः चर्माम्बरो नोऽस्मानहिंसन् हिंसामकुर्वन् शिवोऽस्मदीय-पूजया संतुष्टः कोपरहितो भूत्वा अतीहि पर्वतमतिक्रम्य गच्छ ।।61।।

## द्विषष्टी

**त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ।।६२।।**

**अन्वय :** (हे रुद्र) यच्च जमदग्नेः त्र्यायुषं, कश्यपस्य त्र्यायुषं देवेषु यत् त्र्यायुषं तत् त्रि आयुषं नः अस्तु।

**व्याख्या :** (हे रुद्रदेव) जमदग्नि ऋषि की बाल्य यौवन, तथा वृद्धावस्थारुप जो तीन निर्मल निर्दोष अवस्थाएँ है वे हमें प्राप्त हों इसी प्रकार कश्यपनामक मुनि की तथा इन्द्रादि देवों की जो बाल्ययौवन वृद्धावस्था का समाहार है वह सारा हमें (हमारे यजमान को भी) प्राप्त हो। अर्थात् जमदग्नि आदि ऋषियों के समान हम भी दीर्घजीवी हों। इनकी त्रिविध आयु हमें प्राप्त हो।

**म० :** आशीर्देवतोष्णिक्। यस्याश्चत्वारः पादाः सप्ताक्षराः सोष्णिक्। 'त्र्यायुषमिति यजमानो जपतीति' (का० 5/2/16)। सोऽयं जपो वपनकालीनः। जमदग्नेः मुनेर्यत्त्र्यायुषं त्रयाणां वाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं तथा कश्यपस्यैतन्नामकस्य प्रजापतेः संबन्धि यत्त्र्यायुषं तथा देवेषु इन्द्रादिषु यत्त्र्यायुषमस्ति तत्सर्व त्र्यायुषं नोऽस्माकं यजमानानामस्तु। जमदग्न्यादीनां वाल्यादिषु यादृशं चरितं तादृशं नो भूयादित्यर्थः ।।62।।

## त्रिषष्टी

**शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हिꣳसीः। निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ।।६३।।**

**अन्वय :** (हे क्षुराघिष्ठातृदेव) त्वं शिवः नामासि। स्वधितिः ते पिता, ते नमः। मा मा (मां) हिंसी। (हे यजमान) आयुषे अन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजा-स्त्वाय सुवीर्याय निवर्तयामि (मुण्डयामि)।

**व्याख्या :** हे क्षुराघिष्ठातृदेव तुम्हारा नाम शान्त है अर्थात् तुम

कल्याण करने वाले हो। वज्र तुम्हारा पिता है, तुम्हें नमस्कार है। मेरी हिंसा (हानि) न करना। हे यजमान! दीर्घायुप्राप्ति के लिए अन्नादिभोज्य पदार्थों के लिए सन्तान एवं परिपुष्टधन की प्राप्ति के लिए, उत्तम प्रजननशक्ति और बलप्राप्ति के लिए तेरा मुण्डन संस्कार करता हूँ।

इस अध्याय में आधान, अग्निहोत्र, चातुर्मास्ययाग से सम्बद्ध मन्त्रों को कहा गया है। इस प्रकार यहाँ तृतीय अध्याय पूर्ण होता है।

**म॰** : क्षुरदेवतं यजुः 'शिवो नामेति लोहक्षुरमादायेति' (का॰ 5/2/17)। हे क्षुर, त्वं नाम नाम्रा शिवः शान्तोऽपि। स्वधितिः वज्रं ते तव पिता। ते तुभ्यं नमोऽस्तु। मां मा हिंसीः। 'निवर्तयामीति वपतीति' (का॰ 5/2/17) यजमानदैवतं यजुः। निपूर्वो वृतिर्मुण्डनार्थः। हे यजमान, त्वां निवर्तयामि मुण्डयामि। किमर्थम्। आयुषे जीवनाय अन्नाद्यायान्नभक्षणाय प्रजननाय सन्तानाय रायो धनस्य पोषाय पुष्ट्यै सुप्रजास्त्वाय शोभनापत्यतायै सुवीर्याय शोभनसामर्थ्याय ॥63॥

## इति तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

[चतुर्थ अध्याय से लेकर अष्टम अध्याय के 32 कण्डिकाओं तक अग्निष्टोमयाग से सम्बद्ध मन्त्र कहे गये हैं। चतुर्थअध्याय में यजमान की शुद्धि (संस्कारपूर्वक) तथा प्रधान, रूप से सोमक्रयण के मन्त्रों का सन्निवेश किया गया है। प्रस्तुत प्रसंग में यजमान अरणि से प्रकट हुई अग्नि को लेकर यज्ञशाला में प्रवेश करता है और वहाँ उसका मुण्डनादि संस्कार (दीक्षा) सम्पन्न होता है। फिर गौ को साथ में लेकर सोमक्रयण के लिए जाता है।]

### तत्र प्रथमा

**एदमंगन्म देवयजंनं पृथिव्या यत्रं देवासोऽअजुंषन्त विश्वें। ऋक्सामाभ्यांꣳ संतरंन्तो यजुंर्भी रायस्पोषेंण समिषा मंदेम। इमा आपः शमुं मे सन्तु देवीरोषंधे त्रायंस्व स्वधिंते मैनंꣳ हिꣳसीः ॥१॥**

**अन्वय** : वयम् इदं पृथिव्या देवयजनम् आ अगन्म (आगताः स्मः), यत्र विश्वेदेवासः अजुषन्त। ऋक्सामाभ्यां यजुर्भिः सन्तरन्तः

**अन्वय** : हे घृतपावानो देवाः यूयं घृतं पिबत, वसापावानः वसां पिबत। त्वम् अन्तक्षिस्य हविः असि। दिशः प्रदिशः स्वाहा। आदिशः विदिशः उद्दिशः दिग्भ्यः स्वाहा।

**व्याख्या** : हे घृतपान करने वाले देवों! आप घृत का पान करें। हे वसा के पानकर्ता देवों (घी तेल आदि वसावर्धक द्रव्यों को पीने वाले) आप वसा का पान करें। हे हवि! तुम अन्तरिक्ष की हवि हो। पूर्वादिदिशा और अग्निकोण आदि उपदिशाओं के अधिष्ठाताओं के लिए यह आहुति प्राप्त हो। अधोभागस्थ मध्यभागस्थ ऊर्ध्वभागस्थ दिशाधिपतियों के लिए दी गई आहुति सुहुत हो। इस प्रकार सम्पूर्ण दिग्पालों के लिए यह आहुति प्राप्त हो।

**म०** : 'वसैकदेशं जुहोमि घृतं घृतपावान इति' (का.6/7/17)। वसाहोमहवन्या वसाया एकदेशं जुहुयादिति सूत्रार्थः। वैश्वदेवंयजुः। वसाया द्विरभिघारितत्वाद्धृतमस्ति तत्र। अत एवमाह। हे घृतपावानः, घृतंपिवन्तीति घृतपावानः 'पा पानें'। 'आतो मानिन्' (पा. 2/2/84) इत्यादिना वनिप्। घृतस्य पातारो देवाः, यूयं घृत् पिबत। हे वसा-पावानः वसायाः पातारो देवाः, यूयंबसां पिबत। एवं देवानुक्त्वा वसामाह हे वसे, त्वमन्तरिक्षस्य हविरसि स्वाहा सुहुतमस्तु। 'दिशो व्याघारयति वसाशेषेण वाजिनवदिति' (का.6। 7। 21)। यथा वाजिनशेषेण दिग्व्याघारणमुक्तं तथेत्यर्थः। तद्यथा 'दिशो व्याघारयति दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमुत्तमाभ्यां मध्ये पूर्वार्धेइति प्रतिमन्त्रं प्रदक्षिणंपुरस्तात्प्रथममुत्तमाभ्यां मध्ये पूर्वार्धे चेति'(का. 4। 4। 16-17)। षड् दिग्देवतानि अत्र 'स्वाहाकारः सर्वत्र साकांक्षत्वादिति' (का. 4। 4। 17) वचनात् स्वाहा सर्वत्र युज्यते। दिग्भ्य।ः स्वाहा प्रदिग्भ्यःस्वाहा आदिग्भ्यः स्वाहा विदिग्भ्यः स्वाहा उद्दिग्भ्यः स्वाहा सर्वाभ्यो दिग्भ्यः सुहुतमस्त्वित्यर्थः ॥19॥

## विंशी

**ऐन्द्रः प्राणोऽअङ्गेऽअङ्गे निदींध्यदैन्द्रऽउंदानो अङ्गेऽअङ्गेऽ निधींतः। देवं त्वष्टर्भूरिं ते सर्ठ्ंसमेतु सलंक्ष्मा यद्विषुंरूपं भवांति। देवत्रा यन्तमवंसे सखायोऽनुं त्वा माता पितरौं मदन्तु ॥२०॥**

**अन्वय** : अस्य पशोः अंगे अंगे ऐन्द्रः प्राणः निदीध्यत्। अंगे

अंगे ऐन्द्रः उदानः निदीध्यत्। हे देव त्वष्टः! सलक्ष्मा यद् विषुरुपं भवाति, भवति ते (त्वानुग्रहेण) भूरि सम् (एकीभवतु)। समेतु देवत्रा देवान् प्रति यन्त (गच्छन्तं) त्वा सखायः पितरः अवसे त्वा अनुमदन्तु। (अभ्यनुजानन्तु)।

**व्याख्या** : इन्द्र (आत्मा) से सम्बद्ध प्राणवायु इस पशु के सम्पूर्ण अंगों में प्रकट हो। इन्द्र सम्बन्धी उदानवायु सभी अंगों में स्थिर रहे।। हे त्वष्टा देव! आप समस्त विषमताओं (न्यूनाधिकभाव) को दूर करके उसे एकरुपता प्रदान करें। (तुम्हारी कृपा से शीघ्र ठीक हो जाये) इस प्रकार देवों के प्रति जाते हुए तुमकों तुम्हारे साथी पशु, तेरे पालकजन (माता पिता) (अपने कुल की प्रसन्नता के लिए) तुम्हारे जाने की अनुमति प्रदान करें।

**म०** : 'ऐन्द्रः प्राण इति पशुसंमृशतीति' (का. 6। 9। 1) पशुरूपं हृदिः स्पृशेदिति सूत्रार्थः। इन्द्र आत्मा तत्संबन्धी प्राणः प्राणवायुरस्य पशोरगे अंगे सर्वेष्वंगेषु निदीध्यत् निहितः। 'दीधीङ्दीप्तिदेवनयोः'। अस्य धातोर्दधात्यर्थे वर्तमानात्कर्मणि लेट् परस्मैपदं व्यत्ययेन 'लेटोऽडाटौ' (3। 4। 94) इत्यट्। तथा ऐन्द्रः इन्द्रसंबन्धी उदानवायुः पशोः सर्वेष्वंगेषु निधीतः निक्षिप्तः 'धीङ्आदरानादरयोः'। 'अंगइत्यादौ च' (पा. 6। 1। 119) इत्यंगशब्दस्य एङ् अति प्रकृत्या।। एवमनेन यजुषा पश्वंगेषु प्राणान्दत्वा त्वष्टारमाह। त्वाष्ट्री त्रिष्टुप् हे त्वष्टः त्वष्ट्टनामक देव,यत् पश्वंगजातं सलक्ष्मासमानलक्षणं सत् छेदनेन विषुरूपं नानारूपं भवाति भवति तत् सर्व ते तवानुग्रहेण भूरि बहुलमत्यन्तं संसमेतु सम्यगेकीभवतु। 'प्रसमुपोदः पादपूरणे' (पा. 7। 1। 6) इति समित्वस्य द्वित्वम्। पुनः पशुमाह। हे पशो, एवं प्राणैः। स्वाङ्गैश्चानेन मन्त्रेण दृढीकृतं देवत्रा यन्तं देवान्प्रति गच्छन्तंत्वा त्वां सखायो मित्रभूता इतरे पशवो मातापितरश्च अनुमदन्तु अभ्यनुजानन्तु। बहुवचनं पूजार्थम्। अवसे अवितुं प्रीणायितु-तुम्। तुमर्थे असेप्रत्ययः। यद्वा अवितुं तन्मुखेंनस्वर्गप्रात्या स्वकुलं सर्वमवितुमित्यर्थः ।।20।।

## एकविंशी

**समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवꣳसवितारं गच्छ**

**स्वाहा॑ मि॒त्रावरु॑णौ गच्छ॒ स्वाहा॑होरा॒त्रे ग॑च्छ॒ स्वाहा॒च्छन्दा॑ᳬ सि॒ गच्छ॒ स्वाहा॒ द्यावा॑पृथि॒वी ग॑च्छ॒ स्वाहा॑ य॒ज्ञं ग॑च्छ॒ स्वाहा॒ सोम॑ गच्छ॒ स्वाहा॑ दि॒व्यं नभो॑ गच्छ॒स्वाहा॒ग्निवैं॑श्वान॒रंग॑च्छ॒स्वाहा॒मनो॑ मे॒ हार्दि॑ यच्छ॒ दिवं॑ ते धू॒मो ग॑च्छतु॒ स्व॒र्ज्योतिः॑ पृथि॒वीं भस्म॒नापृ॑ण॒ स्वाहा॑ ।।२१।।**

**अन्वय :** (हे हवि) समुद्रम् अन्तरिक्षं गच्छ स्वाहा। सवितारं देवं गच्छ। मित्रावरुणौं गच्छ अहोरात्रे गच्छ छन्दांसि गच्छ, द्यावापृथिवी गच्छ यज्ञंसोमं गच्छ् दिव्यं नभोगच्छ। जैश्वानरम् अग्निं गच्छ, मे हार्दि मनो यच्छ ते धूमः दिवं गच्छतु। ज्योतिः स्वः भस्भना पृथिवीम् आपृण स्वाहा।

**व्याख्या :** (हे हवि) तुम समुद्र अन्तरिक्ष सवितादेव, मित्रावरुणदेव, अहोरात्र (दिन और रात्रि के अभिमानी देवता) समस्त छन्दों द्याापृथिवी यज्ञ, सोम, दिव्यनभ और वैश्वानरअग्नि नामक देवों तक विस्तार को प्राप्त होवो। इन सभी देवों को यह हवि सुहुत हो। हे देवों हमारा हृदय मन से सम्बद्ध हो। अर्थात् मन नियन्त्रित रहे। तुम्हारा धूम आकाश में जाये (वृष्टि के निमित्त) तुम्हारी ज्वाला आदित्य को प्राप्त हो। भस्म से पृथिवी परिपूर्ण हो।

**म० :** 'प्रतिप्रस्थातोपयजति गुडतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रमिति' (का० 6/9/10) अनुयाजेषु हूयमानेषु प्रतिस्थाता पूर्वस्थापितं गुडतृतीयभागमेकादशधा तिर्यक्प्रच्छिद्य प्रतिमन्त्रं जुहोतीति सूत्रार्थः। हे हविर्गुडावयरूप, त्वं समुद्रादिनामकान्देवान्गच्छ प्राप्नुहि। तर्पणायेति शेषः। स्वाहा सुहुतमस्तु। 'प्रतिवषट्कारंᳬहुत्वा मनो म इति सुखोपस्पर्शनमिति' (का० 6/9/11) प्रतिवषंट्कारमेकैकं हुत्वा सर्वान्ते मुखं स्पृशेदिति सूत्रार्थः। हे समुद्रादिदेवतासमूह, हार्दि हृदयसंबन्धि मे मनो यच्छ निबध्नीहि। निबद्धं मनो हि स्वादायतनान्य च्यवते। 'अनुयाजान्ते स्वरुं जुहोति दिवं ते धूमः इति' (का० 6/9/12) स्वरुदैवतम् हे स्वरो, ते तव धूमः दिवं द्युलोकं गच्छतु वृष्ट्यै। तव ज्योतिः ज्वाला स्वः आदित्यं गच्छतु। स्वःशब्देनादित्योऽभिधीयतेऽन्तरिक्षं वा। भस्मना पृथिवीमापृण समन्तात्पूरय। स्वाहा सुहुतमस्तु ।।21।।

## द्वाविंशी

**मापो मौष॑धीर्हिᳬसी॒र्धाम्नो॑ धाम्नो राज॒स्ततो॑ वरुण नो मुञ्च।**

**यदाहुरध्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च। सुमित्रिया न आपऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ।।२२।।**

**अन्वय :** (हे) राजन वरुण! त्वम् आपः ओषधीः मा हिंसी धाम्नः धाम्नः वयं बिभीमः ततः नः मुञ्च, यत् अध्न्याः इति आहुः। हे वरुण वयं इति शपामहे ततो नः मुञ्च। ओषधयः आपः नः सुमित्रियाः सन्तु। यः अस्मान् द्वेष्टि तस्मै दुर्मित्रिया सन्तु, यं चं वयं द्विष्मः।

**व्याख्या :** (हे वरुण) तुम जल और औषधियों की हिंसा न करो अर्थात् उनकी रक्षा करें। हे राजा वरुण। पापसमन्वित दृश्य एवं अदृश्य) स्थानों से हमें मुक्त करो। जो पूर्वोक्त औषधि आदि पदार्थ है उनको विद्वानों ने "व्यर्थ नाश न करने योग्य" पूजनीय कहा है। हे वरणीयदेव ऐसा जानकर भी जो हम उनका दुरुपयोग करते हैं उस पाप से हमें मुक्त करो। औषधियाँ और जल हमारे लिए मित्रवत् हितकारी हो। जो हमसे द्वेष करता है उसके लिए ये शत्रुवत् दुःख देने वाली होवें, जिससे हम द्वेष करते हैं उनके लिए भी अनिष्टकारी हों।

**म० :** 'अभ्यवेत्य शुष्कार्द्रसन्धी हृदयशूलमुपगूहति शुगसि तमभिशोच योऽस्मान् द्वेष्टि चं च वयं द्विष्मो मापो मौषधीरिति चेति' (का. 6। 10। 3) जले प्रविश्य आलब्धस्य पशोर्हृदयस्थं मांसं यस्मिन् श्रितं स हृदयशूलस्तं शुष्कार्द्रभूप्रदेशयोः सन्धौ निगूहेत् भूमावधोमुखं क्षिपेत् शुगसि माप इति मन्त्राभ्यामिति सूत्रार्थः। हृदयशूलदैवतं यजुः। हे हृदयशूल, त्वमपो जलानि ओषधी श्च मा। हिंसीः 'धाम्नो धाम्नः सुमित्रिया न इत्युपस्पृशन्त्यप इति' (का.6। 10। 14) सर्वे ऋत्विग्यजमाना मन्त्राभ्यां जलं स्पृशन्तीति सूत्रार्थः। वरुण-देवतं यजुः। हे राजन् वरुण, धाम्नो धाम्नः यस्माद्यस्मात् त्वदीयपाशसमन्वितात्स्थानात् वयं बिभीमस्तस्मात्तरमास्त्स्थानात् नोऽस्मान्मुञ्च-मोचय। यदाहुः। वरुणदेवत्या गायत्री अवसानहीना। अध्न्या इति गोनाम प्रकरणदिहानूबन्ध्याविषयम्। बहुवचनमनुबन्ध्याबहुत्वेऽर्थवत्। एकानूबन्ध्यापक्षेतु पूजार्थम्। अध्न्या इतियदाहुः वेदस्मृतिलोकवाक्यानि अध्न्या अहन्तव्या अवध्याःपूजनीया इतिवदन्ति। इतिकरणेन वाक्यस्यार्थम- भिनयेनदर्शयति। हे वरुण, वयं तु इति शपामहे। इतिकरणं प्रदर्शनार्थम्। शपतिर्हिंसार्थः। इति

एवमनेन विधिना अध्न्या हि स्मः। अतएव त्वां याचामहे। हे वरुण, ततस्तस्मादध्न्यावध-जातादेनसो नोऽस्मान्मुञ्च मोचय! सुमित्रिया: आपः ओषधयश्चनोऽस्मांकं सुमित्रियाः साधुमित्रत्वेनावस्थिताः सन्तु। यः शत्रुरस्मानन्द्वेष्टि वयं च यं शत्रुं द्विष्मः द्वेषं कुर्मःतस्मै उभयात्मकाय शत्रवे आप ओषधयश्चध सुमिंत्रियाः अभित्रेत्वनाव-स्थिताः सन्तु। धाम्नों धाम्र इति बन्धः शूलोपगूहनमन्त्रस्य शेषो वा। सुमित्रिया इति मन्त्रोऽपामभिमन्त्रणे वा ।।22।।

**एवमग्नीषोमीयः पशुःयागःपूर्णः।**

**त्रयोविंशी**

**हुविष्मंतीरिमाऽआपों हुविष्माँ २ आ विंवासति। हुविष्मांन्देवो अंध्वुरो हुविंष्माँ २।। अस्तु सूर्यः ।।२३।।**

**अन्वय** : हविष्मती इमा आपः हविष्मान् यजमानः आविवासति परिचरति। देवः अध्वरः हविष्मान् अस्तु। सूर्यः हविष्मान् अस्तु।

**व्याख्या** : हवि से संयुक्त इस (वसतीवरीसंज्ञक) जल; को हविष्मान् (यज्ञ करने वाला यजमान ग्रहण करता है। प्रयोग में लाता है। दिव्यगुणगणसम्पन्न देवता भी जिस हिंसारहित याग में हवि स्वीकार करते है वे हवि से सन्तुष्ट हों, तथा सूर्यदेव भी इस यज्ञ में प्रदत्त हवि को ग्रहण करते हुए यज्ञफल प्रदान करे। इस मन्त्र में वसतीवरी संज्ञक जल के ग्रहण का विधान है। जिसकी विधिभाष्य में वर्णित है।

**म॰** : अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञानामपां ग्रहणमभिधी-यते। 'अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणं स्यन्दमानानमनस्तमितेऽ-स्तमित श्चेन्निनाह्यात्पुरेजान श्चदभीजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्योभयाभाव उल्कुषीहिरण्यं वोपर्युपरि धारयन् हविष्मतीरिति' (का. 7। 9। 7। 10) अग्नीषोमीयस्य पशोर्वपामार्जनपर्यन्ते कर्मणि कृते अनस्तंगते रवौ वहन्तीनामपामेकदेशाद्वसतीवरीसंज्ञानां सोमार्थानामपां ग्रहणं कार्यम् हविष्मतीरिति मन्त्रेण।यदि रविरस्तं गतो यजमानश्च पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्यन्माणिकाद्वसतीवरीग्रहणम्। निनहनीयो निखननीयो निनाह्यः। यदिच यजमानः पुरा न सोमयाजी तर्हि समीपस्थितस्य यष्टुर्मणिकाद्ग्रहणम्। स्वस्य अन्नस्य यज्ञकर्तृत्वाभावे उल्का कनकंवा

वहन्तीनामपां समीपे धारयन्वहन्तीभ्यो वसतीवरीर्गृह्णीयादिति सूत्रार्थः। अनुष्टुब्लिङ्गोक्तदेवता। हांवेष्मान् हविषा संयुक्तो यजमानः हविष्मतीर्हविषा संयुक्ता इमाआपःअपः आविवासति वसतीवरीः परिचरति। विवासतिः परिचर्यायाम्। 'यत्र वै यज्ञस्य शिरोऽच्छिद्यन्त तस्य रसोदुस्वापः प्रविवेश' (3। 9। 2। 1) इति श्रुतेरपां हविष्मत्त्वम्। ततो देवो द्योतमानोऽध्वरो यागोऽपि स्वशरीरनिष्पत्तये हविष्मानस्तु आभिरद्भिरित्यर्थः। किंच सूर्योऽपि देवो यजमानस्य फलदानाय तृप्यर्थ च हविष्मान्हविः संपन्नोऽस्तु भवतु। एतस्मै वै गृह्णाति य एष तपति'(3। 6। 2। 12) इति श्रुते वसतीवरीभिः सूर्यस्य हविष्मत्त्वम् ।।23।।

## चतुर्विंशी

**अ॒ग्नेर्वोऽप॑न्नगृहस्य॒ सद॑सि सादयामीन्द्रा॒ग्न्योर्भा॑ग॒धेयीं स्थ मि॒त्रावरु॑णयोर्भा॒ग॒धेयीं स्थ॒ं व्विश्वै॑षां दे॒वाना॑ं भाग॒धेयीं स्थ। अ॒मूर्या उप॒ सूर्ये॒ याभि॑र्वा॒ सूर्यः स॒ह। ता नौ॑ हिन्वन्त्वध्व॒रम् ।।२४।।**

**अन्वय :** (हे वसतीवर्यः आपः) युष्मान् अपन्न गृहस्य अग्नेः सदसि सादयामि। यूयम् इन्द्राग्न्योः भागधेयीस्थ, मित्रावरुणयोः भागधेयीस्थ, विश्वेषां देवानां भागधेयीस्थ। अमूर्या उपसूर्ये वा याभिः सह सूर्यः ताः नः अध्वरम् हिन्वन्तु।

**व्याख्या :** हे वसतीवरीसंज्ञक जल! आप को अविनस्वरगृह वाले (शालाद्वार्य) अग्नि के निकट तुम्हें (अपतनशीलयज्ञशाला में) स्थापित करता हूँ। तुम इन्द्र और अग्निदेवता के अंशरुप हो। मित्र और वरुण देव के अंशरुप हो। सम्पूर्ण देवों के अंशरुप हो। प्रसिद्ध ये वसतीवरीनामक जल, जो अन्तरिक्ष में व्याप्त सूर्य के समीप है अथवा जिनके सहयोग से सूर्य वृष्टि करते हैं वे सब हमारे यज्ञ को आप्यायित (तर्पित) करें।

**म॰ :** 'अग्नेर्व इति निदधाति शालाद्वार्यमपरेणेति' (का. 7। 9। 11) नूतनगार्हपत्यात्पश्चिमभागे ता वसतीवरीरासादयतीति सूत्रार्थः। चत्वारि यजूंष्यब्देवत्यानि। हे वसतीवर्यः, वो युष्मान् अग्नेः शालाद्वार्यस्य सदसि सीदन्त्यस्मिन्निति सदो निकटस्थाने तत्र सादयामि स्थापयामि। किंभूतस्याग्नेः। अपन्नगृहस्य न पन्नं पतितं गृहं यस्य तस्य। अविनश्वरगृहस्येत्यर्थः।

'दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति' (का. 7। 9। 17) शालाद्वार्यसमीपस्था वसतीवरीरादाय शालादक्षिणद्वारेण नीत्वोत्तरवेदेर्दक्षिणश्रोणौ निदध्यादिति सूत्रार्थः। हे वसतीवर्यः, यूयमिन्द्राग्नयोः इन्द्राग्निदेवतयोः स्थ भागधेयो भागरूपा भवथ। भाग एव भागधेयः। 'नामरूपभागेभ्यः स्वार्थे धेयप्रत्ययः' (पा. 5। 4। 36) 'केवल मामक-' (पा. 4। 1। 30) इत्यादिना डीप्। 'उत्तरस्यां पूर्ववन्मित्रावरुणयोरिति वेति' (का. 7। 9। 29-22) पूर्ववदिन्द्राभ्योरेति मन्त्रेणैव मित्रावरुणयोरिति मन्त्रेणवोत्तर वेदेरुत्तरश्रोणौ वसतीवरीनिर्दध्यादिति सूत्रार्थः। हे वसतीवरी-संज्ञका आपः, यूयं मित्रावरुणयोर्देवतयोर्भागरूपाभवथ। 'विश्वेषां देवानामित्याग्नीध्र इति' (का. 7। 9। 23) उत्तरवेदिश्रोणेः सकाशाद्वसतीवरीरादायाग्नीध्रीयस्य पश्चान्निदध्यादिति सूत्रार्थः। हे वसतीवर्यः, यूयं सर्वेषां देवानां भागरूपा भवथ। इदानीमभिनयेन दर्शयन्नाह। अमूर्याः ऋक् अब्देवत्या गायत्री याःप्रसिद्धा अमूरीदृश्यो वसतीवर्याया आपः। उपसूये सूर्ये-समीपेस्थिताः। विभक्तिव्यत्यः। याभिर्वा। वाशब्दः समुच्चे। याभिश्चाद्भिः सह सूर्यो यातिता आपो नोऽस्माकमध्वरं यज्ञं हिन्वन्तु तर्पयन्तु। हिन्वतिः तर्पणार्थः ॥ 24॥

## पञ्चविंशी

**हृदे त्वा मन॑से त्वा दिवे त्वा सूर्या॑य त्वा। ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा॑ यच्छ ॥२५॥**

**अन्वय :** (हे सोमराजन् हृदेत्वा उपावहरामि), मनसे त्वा, दिवे, त्वा सूर्याय, त्वा उपावहरामि। इमम् अध्वरम् दिवि ऊर्ध्वं कृत्वा देवेषु होत्राः यच्छ। निबध्नीहि।

**व्याख्या :** हे सोम! हृदयोपलक्षित संवेदनाशक्तिसम्पन्न मुनष्यों के लिए तुम्हारा आहरण करता हूँ। अथवा यह मेरा ही हो" ऐसी निश्चयात्मिका बुद्धि के लिए तुम्हारा आहरण करता हूँ। मन के लिए या मनन शक्तिसम्पन्न पितृगणों के लिए तुम्हारा आहरण करता हूँ। द्युलोकवासी देवों के लिए और सूर्यनारायण के लिए तुम्हारा आहरण करता हूँ। इस हिंसारहित यज्ञ को द्युलोक में ऊपर विद्यमान देवों के लिए होताओं के माध्यम से प्राप्त होओ।

**म० :** 'आज्यासादनात्कृत्वेषान्तरेणार्धसोममद्रिषु संमुखेषु निदधाति हृदे त्वेति' (का. 9। 1। 5) आज्यासादनपर्यन्तं कर्म कृत्वा सोममादाय हविर्धाने गत्वा सोमं विस्म्रंस्य तदर्धं दक्षिणशकटेषान्तरालेन संमुखेष्वभिषवार्थपाषाणेषु निदध्यात्। अश्मनां स्थूलो भागो मुखमिति सूत्रार्थः। सोमदेवत्यानुष्टुप्। हे सोम, हृदे बुध्यै निश्चयात्मिकायै एतन्मम स्यादिति कामरूपायै त्वा त्वामुपावहरामीति शेषः। मनसे संकल्पविकल्पात्मकाय त्वामुपावहरामि। त्वाशब्दानामावृत्या क्रियावृत्तिर्बोध्या। दिवे द्युलोकप्राप्तये त्वामुपावहरामि। सूर्याय सूर्यमु-खेभ्यो देवेभ्यस्ततृप्तये त्वामुपावहरामि। यद्वायमर्थः। हे सोम, हृदे हृदयवद्भ्यो मनुष्येभ्यः। मनसे मनस्विभ्यः पितृभ्यः दिवे द्युलोकवासिभ्यो देवेभ्यो विशेषतः सूर्याय च त्वामुपावहरामीति शेषः। एतदर्थे तित्तिरिः 'स वा अध्वर्युः सोममुपावहरतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैन सर्वाभ्य उपावहरतीति'। किंच एवमुपावहतोऽभिषुतश्च त्वमिममध्वरंमदीयं यज्ञमूर्ध्वमुत्कृष्टं कृत्वा दिवि द्युलोकवर्तमानेषु देवेषु होत्राः वषट्कारावादिनः सप्तहोतृकान् यच्छ निबध्नीहिं ।।25।।

## षड्विंशी

**सोमं राजन्विश्वास्त्वं प्रजा उपावरोह विश्वास्त्वां प्रजा उपावरोहन्तु। शृणोत्वग्निः समिधा हवंम्मे शृण्वन्त्वापो धिषणाश्च देवीः। श्रोता ग्रावाणो विदुषो न यज्ञं शृणोतु देवः संविता हवंम्मे स्वाहा ।।२६।।**

**अन्वय :** हे सोमराजन् त्वं विश्वाः प्रजाः उपावरोह, विश्वाः प्रजाः त्वाम् उपावरोहन्तु। अग्निः समिधा मे हवम् श्रृणोतु। देवीः घिषणा आपः श्रृण्वन्तु। ग्रावाणो विदुषो न, नः यज्ञं श्रोता (श्रृणुत)। देवसविता में हवं श्रृणोतु स्वाहा।

**व्याख्या :** हे सोमराजा! आप समस्तप्रजा के पालक बनें। या अपने (अनुग्रह से तृप्त करें) तथा सभी प्रजायें प्रत्युत्थान अभिवादनादि द्वारा (अपनी श्रद्धा-भक्ति के द्वारा) आप को सन्तुष्ट करें। अग्निदेव सम्यक् रुप से प्रदीप्त होकर मेरे आह्वान को सुने तथा जल और बुद्धि

प्रदात्री वाक्देवी भी हमारे आह्वान को सुनें। हे सोमामिषवसाधनभूत प्रस्तर तुम भी ज्ञानवान् की तरह हमारे यज्ञप्रयुक्त आह्वान को सुनो। सविता देवता भी हमारी प्रार्थना को सुने और मेरी यह आहुति उन्हें तृप्तिदायक हो।

यहाँ प्रातःसवन के कृत्य में अध्वर्यु प्रचरणीपात्र से आहवनीय अग्नि में आज्याहुति देता है।

**म० :** किंच। हे सोम राजन्, विश्वाः सर्वाः प्रजा उपावरोह आधि पत्यं प्रजानां कुर्वित्यर्थः। 'विश्वास्त्वामिति विसृज्योपतिष्ठत इति' (का. 9। 1। 6) ग्रावासु स्थापितं सोमं विमुच्योपस्थापनं कुर्यादिति सूत्रार्थः। हे सोम, विश्वाः सर्वाः प्रजाः त्वामुपावरोहन्तु प्रत्युत्थानादिभिः प्राप्तुवन्तु। 'अभूदुषा रुशत्पशुरित्युच्यमाने चतुर्गृहीतंप्रचरण्या जुहोति श्रृणोत्वग्निरिति' (का. 9। 2। 24) अभूदिति मन्त्रे होत्रा शस्यमाने चतुर्गृहीतमाज्यं प्रचरणीसंज्ञया स्रुचाध्वर्युरतिप्रणीते जुहोतीति सूत्रार्थः। त्रिष्टुब्लिगोक्तदेवता। अग्निः समिधा समित्पूर्विकयाआहुत्या मे हवं मदीयमाह्वानं शृणोतु। आपो ममाह्वानं श्रण्वन्तु। चकारः। समुच्चयार्थः। धिषणा देवीः वाचो देव्यश्च मे हवं श्रृण्वन्तु। 'धि षणा धीसादिन्यो वा धीमानिन्यो वा' (निरु. ।7।4) इति यास्कः। धियं सन्वन्ति ददति घिषणाः 'षणु दाने' तनादिः। तृतीयः पादः प्रत्यक्षकृतो मध्यमपुरुषयोगात्। हे ग्रावाणः, अभिषवार्थमिहोपस्थिता यूयं मम हवं श्रोत श्रणुत। 'तप्तनप्त-नथनाश्च' (पा. 7। 1। 45) लोण्मध्यमपुरुषबहुवचनस्य तवादेशे गुणे विकरणव्यत्ययेच श्रोतेति रूपम्। संहितायांतु दीर्घः। विदुषो न। न इवार्थे विभक्तिव्यत्ययः। विद्वांसो यज्ञमिव यथा विद्वांसः प्रत्यक्षतो जानन्तो यज्ञं श्रृण्वन्ति तथा यूयं इदं श्रणुत। तथा सवितादेवः में मम हवं श्रणोतु। स्वाहा सुहुतमस्तु स्वाहा वागाहेति वा।।26।।

## सप्तविंशी

**दे॒वीरा॑पोऽअपान्नपा॒द्यो व॑ ऊ॒र्मिर्ह॑वि॒ष्य॒ इन्द्रि॒यावा॑न्म॒दिन्त॑मः।**
**तं दे॒वेभ्यो॑ देव॒त्रा द॑त्त शुक्र॒पेभ्यो॒ येषां॑ भा॒ग स्थ॒ स्वाहा॑ ।।२७।।**

**अन्वय :** (हे) देवीः आपः व अपांनपात् यः ऊर्म्मिः हविष्यः इन्द्रियावान् मदिन्तमः तं देवत्रा देवेभ्यो दत्त। शुक्रपेभ्यः येषां भागः स्थ।

**व्याख्या :** हे दिव्यजलों! तुम्हारा पुत्र स्वरूप यह जलसंघात

(ऊर्मि) हैं, यह हवि के योग्य है, बलशाली एवं प्रसन्नता देने वाली है। अतः दया दाक्षिण्यादि शुभगुणों की रक्षा के लिए इसे देवताओं को प्रदान करो जो कि सोमपान करनेवाले हैं तथा दीप्तिमान् है। इन्हीं के तुम अंशस्वरूप हो। यहआज्य तुम लोगों को प्राप्त हो।

यहाँ नदी के समीप जाकर जल के ऊपर तृण डालकर आज्याहुति दी जाती है।

**म॰ :** 'आपो गत्वा देवीराप इत्यप्सु जुहोतीति' (का. 9। 3। 7) यच्चतुर्गृहीतमाज्यं सहनीतं तज्जलं प्रति गत्वाजुहोतीति सूत्रार्थः। अब्देवत्या पंक्तिः पञ्चपदा चत्वारिंशद्वर्णा पंक्तिः। अत्र द्वितीयः सप्ताक्षरः तुर्यपञ्चमो नवार्णौ तेनैकाधिका स्वाहेति यजुः।हे आपोदेवोः देव्यः, वो युष्माकमपांनपात् अपत्यरूपो योऽयमूर्मिरप्संघातः कल्लोलोऽस्ति देवत्रा देवान्प्रति यायिनं तमूर्मिं देवेभ्यो दत्त प्रयच्छत। येषां देवानां यूयं भागः स्थ भागरूपा भवथ किंभूत। ऊर्मिः। हविष्यः तथा इन्द्रियावान् इन्द्रियं वीर्यमस्यास्तीति इन्द्रियावान्। दीर्घश्च्छान्दसः। प्रीतः सन्निन्द्रियवीर्यवृद्धिकारी। तथा मदिन्तमः मदयतीति मदी अतिशयेन मदी मन्दितमः पीयमानोऽत्यन्तहर्षकारी तर्पयितृतमः। 'नाद्धस्य' (पा. 7। 2। 17) इति तमपि नुमागमः। किंभूतेभ्यो देवेभ्यः। शुक्रपेभ्यः शुक्र इत्युपलक्षणम्। शुक्रादीन् सोमग्रहान् पिबन्तीति शुक्रपाः तेभ्यः। यदा शुकं दीप्तं सोमं पिबन्तीति। स्वाहाइदमाज्यं युष्मभ्यं हुतमस्तु। ग्रहीष्यमाणानामपां मूल्यत्वेनेयमाहुतिरित्युक्तं तिक्तिरिण। 'देवीरापो अपांनपादित्याहाहुत्या वै निष्क्रीय गृह्णातीति' ।।27।।

### अष्टाविंशी

**कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि। समापो अद्भिरग्मत समोषधीभिरोषधीः ।।२८।।**

**अन्वय :** (हे आज्य) त्वं कार्षिः असि (हे आपः समुद्रस्य अक्षित्यै त्वा उन्नयामि गृह्णामि। अद्भिः संजग्मत, ओषधीः, ओषधीभिः सम्। (संगच्छन्ताम्)।

**व्याख्या :** हे आज्य! तुम देवों द्वाराभक्षित हो तथा मनुष्य के सभी पापतापों को दूर करने वाले हो। (वसतीवरीरुप) हे जलों! समुद्र की अक्षीणता के लिए मैं तुम्हें उचित मात्रा में ग्रहण करता हूँ।

मैत्रावरुणचमस में स्थित जल। तुम वसतीवरीजलों के साथ मिल जाओ। ओषधियाँ औषधियों मुद्गमसूरादि (व्रीहियवादि) के साथ अच्छी तरह मिल जाए।

इस मन्त्र के द्वारा अध्वर्यु पूर्वआहुतिशेष आज्य को गिराकर मैत्रावरुणचमस द्वारा जल ग्रहण करता है तथा आगे मैत्रावरुणस्थजल को वसतीवरी जल में मिलाता है।

**म॰ :** 'कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहतीति' (का. 9। 3। 7)। अप्सुहुतमाज्यं मैत्रावरुणचमसेन दूरीकरोतीति सूत्रार्थः। कार्षिरसीत्यादिमन्त्रत्रयं मिलित्वानुष्टप्छन्दः। आद्यस्याज्यं देवता। हे आज्यपदार्थ, त्वं कार्षिराकृष्टोऽसि देवतया भक्षितोऽसीत्यर्थः। यद्वा कर्षतीत्येवंशील: कार्षिः अन्तर्गतशमलापनेतासि। तदाह तितिरि: 'कर्षिरसीत्याह शमलमेवासामुपप्लावयतीति'। 'समुद्रस्य त्वेति तेन गृह्णातीति' (का. 9। 3। 9)। मैत्रावरुणचमसेन तदडागादिस्था अपो गृह्णातीति सूत्रार्थः, द्वे यजुषी अपि। 'आपो वै समुद्रः' (3। 9। 3। 27) इति श्रुतेवसतीवरीलक्षणस्य समुद्रस्याक्षित्यै अक्षीणत्वाय हे जल, त्वा त्वामुन्नयामि गृह्णामि। वसीतवरीणां वृद्धौ जलमेतद्गृह्यते। 'प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसीतवरीश्च संस्पर्शयति समाप इति' (का. 9। 3। 12) जलाशयात्प्रत्यागत्य चात्वालोपरि मैत्रावरुणचमसस्थाअपो वसतीवरीभिः संयोजयतीति सूत्रार्थः। आपो मैत्रावरुणचमसस्था अद्भिः वसतीवरीभिः समग्मत संगच्छन्ताम् गमेर्लुङितङि प्रथमा बहुवचने शपिलुप्ते गमन (पा. 6-4-98) इत्युपधा लोपे समग्मतेति रूपम्। तथा ओषधीः ओषधयः मुद्गमसूरादिका ओषधीभिर्व्रीहियवादिभिः संगच्छन्ताम् अपां करणभूतत्वादोषधीनामपि योगोऽस्तु ॥28॥

## एकोनत्रिंशी

**यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः। स यन्ता शश्वतीरिषः स्वाहा ॥२९॥**

**अन्वय :** (हे) अग्ने! यं मर्त्यं पृत्सु अवाः (अवसि) वाजेषु यं जुनाः (गच्छसि) सः शश्वतीः इषो यन्ता प्राप्स्यति स्वाहा।

**व्याख्या :** हे अग्निदेव आप संग्रामों में जिसमनुष्य की रक्षा करते हैं तथा जिसके हविष्यान्नों को ग्रहण करने केलिए आप उसके

पास जाते है, वह मनुष्य आप के अनुग्रह से नित्य ही अन्नों को प्राप्त करेगा। यह हवि आपको प्रसन्न करें।

यहाँ प्रचरणी संस्रव होम का विधान विहित है।

**म॰ :** 'प्रचरणीसंस्त्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतंयमग्ने' (का. 9। 3। 16) इति अग्निष्टोमसंस्थे क्रतौ प्रचरणीपात्रलिप्तमाज्यशेषं जुहुयात् शेषाज्यस्य होमपर्याप्तभावे चतुर्गृहीतमादाय जुहोतीति सूत्रार्थः। आग्नेयी गायत्री मधुच्छन्दोदृष्टा। हे अग्ने, पृत्सु संग्रामेषु यं मर्त्यं मनुष्यं त्वमवाः अवसि रक्षसि। अवतेः 'इतश लोपः परस्मैपदेषु' (पा. 3। 4। 97) इति सिप् इकारलोपे 'लेटोऽडाटौ' (पा. 3। 4। 94) इत्याडागमे वा इति रूपम्। किंच वाजेषु वाज इत्यन्ननाम। हविर्लक्षणेष्वेषु अन्ननिमित्तिं यं पुरुषं त्वं जुनाः गच्छसि। हवींषि ग्रहीतुं यस्य सकाशं गच्छसीत्यर्थः। 'जु गतौ' श्राप्रत्ययः 'इतश्च लोपः–' (पा. 3। 4। 97) इतीकारलोपे रूपं जुना इति। स मर्त्यस्त्वदनुग्रहेण शश्वतीरिषः नित्यान्यन्नानि धनरूपाणि यन्ता नियस्यति प्राप्स्यतीत्यर्थः लुट्। स्वाहा सुहुतमस्तु। उक्थसंस्थे यमग्ने इति मन्त्रेणाद्यं परिधिं स्पृशेत्। षोडशिसंस्थे रराटीं स्पृशेत्। अतिरात्रे छदिः स्पृशेत्। अन्यसंस्थासु हविर्धानं प्रविशेत् ।।29।।

त्रिंशी

**देवस्यं त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे रावासि गभीरमिममध्वरङ्कृधीन्द्राय सुषूतमम्। उत्तमेनं पविनोर्जस्वन्तं मधुमन्तं पयस्वन्तं निग्राभ्या स्थ देवश्रुतस्तर्पयत मा ।।३०।।**

**अन्वय :** (हे प्रस्तर) सवितुः देवस्य प्रसवे अश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यां त्वा आददे। हे (अभिषवसाधनपाषाण) त्वं रावा असि इमम् अध्वरं गभीरं कृधि। इन्द्राय सुषूत्तमम् उत्तमे पविना ऊर्जस्वन्तं मधुमन्तं पयस्वन्तं कृधि। (हे आपः) यूयं निग्राभ्यः देवश्रुतः स्थ मा तर्पयत।

यहाँ सोमरस निकालने के लिए ग्रावा (पाषाण) का ग्रहण किया जाता है।

**व्याख्या :** हे प्रस्तर! सवितादेवता की प्रेरणा से मैं अश्विनीकुमारों

की भुजाओं से तथा पूषादेवता के हाथों से तुम्हें ग्रहण करता हूँ। (हे अभिषवसाधनपाषाण) तुम अभीष्ट पदार्थों के दाता हो, हमारे इस याग को महान् बनाओं। (समुद्र के समान गंभीर एवं ऐश्वर्यवान् बनाओं) हे इन्द्र! तुम अपने श्रेष्ठवज्र से इसे (सोम को) बलयुक्त माधुर्ययुक्त रसयुक्त और दुग्धादिपौष्टिक पदार्थों से युक्त करो। हे जल तुम मेरे लिए ग्रहण योग्य बनों। देवों में विख्यात आप हमें तृप्त करें।

**म॰ :** 'देवस्य त्वेत्यद्रिमादाय वाचं यच्छति प्राग्धिङ्कारात् स उपांशुसवन इति' (का. 9। 4। 5। 6) सोमाभिषवहेतुमश्मानं गृहीत्वा हिंकारात्प्राक् मौनी स्यात् सोऽश्मोपांशुसवनसंज्ञः उपांशुग्रहाय सोमः सूयते येनेति सूत्रार्थः देवस्य त्वेति व्याख्यातम्। हे अभिषवसाधन पाषाण, त्वं रावासि। 'रा दाने' रातीति रावा वनिप्। आहुतीनां दक्षिणानां च दाता भवसि। तत इममध्वरं मदीयं यार्गं गभीरं गम्भीरं महान्तं कृधि कुरु। 'श्रुश्रृणपृकृवृभ्यश्छन्दसि' (पा. 6। 4। 102) इति हेर्धिः उत्तमेनोत्कृष्टेन पविना वज्रसदृशेन त्वयाहं सोममीदृशं करोमि। किंभूतम्। इन्द्रायेन्द्रार्थं सुषूतं सुष्टु अभिषुतंतमम्। निष्ट्रातकारलोपो दीर्घश्च छान्दसः। तथा ऊर्जस्वन्तं मधुस्वादेन रसेनोपेतं पयस्वन्तं पयःस्वादुना रसेनोपेतं एवंविधं सोमं त्वयाहं करोमीत्यर्थः। 'निग्राभ्यासु वाचयत्युरस्येनानिगृह्य निग्राभ्या स्मेति'(का. 9। 4। 7) अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्च्यन्ते तासु गृह्यमाणासु वाचयेत्। यजमानश्च स्वोरसि निग्राभ्या निगृह्यालभ्य च मन्त्रं वक्तीति सूत्रार्थः। हे आपः, सूर्य निग्राभ्या निग्राह्या अस्माभिर्नितरां ग्रहीतव्यः स्थ भवथ। यस्मादिन्द्रेणीरसि यूयं ग्रहीतास्ततो निग्राभ्याः। हग्रहोर्भः। देवश्रुतः देवैः श्रूयन्ते ताः देवेषु प्रख्याताः ततो बहुमानान्विता यूयं मां मां तर्पयत प्रीतिं कुरुत ।।30।।

### एकत्रिंशी

**मनों मे तपर्ययत वाचं मे त पर्ययत प्राणं मे तर्पयत चक्षुर्मे त पर्ययत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन् ।।३१।।**

**अन्वय :** (हे आपः) मे मनः तर्पयत मेंवाचः प्राणं तर्पयत। मे चक्षुः श्रोत्रं तर्पयत। में आत्मानं तर्पयत, में प्रजापशून् गणान् तर्पयत। मे

गणः मा वितृषन्।

**व्याख्या :** (हे निग्राभ्यजल) मेरे मन, वाणी, प्राण, नेत्र, श्रोत्र, आदि इन्द्रियों को तृप्त करो। मेरी आत्मा को तृप्त करो, मेरी प्रजा (पुत्र पौत्रादि) पशु और बन्धुबान्धव तथा हितैषीजनसमुदाय को सन्तुष्ट करो। मेरे आत्मीयजन भूखे प्यासे न रहे। सांसारिक पदार्थों की प्राप्ति के लिए भटकते न रहे या मेरे द्वारा प्रदत्त पदार्थों को पाकर भी तृष्णायुक्त न हो, उनमें मैं अनुरक्त रहूँ तथा वे मेरे में।

**म० :** एवं समासेनोक्त्वा व्यासेनाह। मे मम मनः वाचं प्राण चक्षुः श्रोत्रं तर्पयत। मदीयानि मनःप्रभृतीनिन्द्रियाणि तर्पयतेत्यर्थः। एवं व्यासेनोक्त्वा पुनः समासेनाह। आत्मानं शरीरं प्रजां पुत्रादिसंपत्तिं पशुन्गावादीन्गणान् मनुष्यसंघातश्च तर्पयत। मे मदीयागणा मनुष्यसहा मा वितृषन् मया द्रव्यदानेन पूरिता अपि सन्तो विगततृष्णा मा भवन्तु। अनुरक्तगणोऽहं भवेयमिति यजमान आशास्त इत्यर्थः ।।31।।

## द्वात्रिंशी

**इन्द्रा॑य त्वा वसु॑मते रु॒द्रव॑त॒ऽइन्द्रा॑य त्वादि॒त्यव॑त॒ऽइन्द्रा॑य त्वाभिमाति॒घ्ने। श्ये॒नाय॑ त्वा सोम॒भृते॒ग्नये॑ त्वा रायस्पोष॒दे ।।३२।।**

**अन्वय :** (हे सोम) त्वा त्वाम् इन्द्राय वसुमते रुद्रवते त्वा, आदित्यवते इन्द्रायत्वा, अभिमातिघ्ने इन्द्राय त्वा, त्वा सोमभृते श्येनाय् त्वा रायस्पोषदे अग्नये अहं (मिमे)।

**व्याख्या :** हे सोम, वसुसंज्ञक प्रातःसवन के देवता से युक्त इन्द्र के लिए) एकादशरुद्रों से युक्त, इन्द्र के लिए तथा द्वादशआदित्य से युक्त इन्द्र के लिए मैं तुम्हें प्रदान करता हूँ। तुझे शत्रुविनाशक इन्द्र के लिए परिमित करता हूँ। सोम को धारण करने वाले श्येनरुप गायत्री केलिए परिमित करता हूँ, तथा धन एवं पुष्टि देने वाले अग्नि के लिए तुझे परिमित करता हूँ।

यहाँ उपांसुसवन पर एक एक करके पाँचमुष्टि सोम अध्वर्यु द्वारा रखा जाता है।

**म० :** उपांशुसवने सोमं मिमीत इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रमिति' (का. 9। 4। 8) उपांसुसवनं पूर्वोक्तमश्मानमधि

षवणचर्मणि निधाय तदुपरि पञ्च मन्त्रैः पञ्चवारमभिषोतव्य-सोममुष्टिं प्रक्षिपतीति सूत्रार्थः। पञ्च यजूंषि सौम्यानि। तत्राद्यम् हे सोम, इन्द्रायेन्द्रार्थं त्वा त्वां मिमे इति शेषः। किंभूतायेन्द्राय। वसुमते वसवोऽस्य सन्तीति वसुमान् तस्मै। वसुसंज्ञकप्रातःसवनदेवतायुक्तायेत्यर्थः। रुद्रवते रुद्राःसन्तियस्येति रुद्रवान् तस्मै रुद्रनामकमाध्यन्दिसवनदेवतायुक्ताय। अद्वितीयम्। आदित्यवते तृतीययसवनदेवतायुक्तायेन्द्राय हे सोम, त्वां त्वां मिमे। अथ तृतीयम्। अभिमातीन् शत्रुन् हन्तीत्यभिमातिहा तस्मै अभिमातिघ्ने शत्रुहन्त्रे इन्द्राय सोम,त्वां मिमे। 'सपत्नो वा अभिमातिः' (3। 9। 4। 9) इति श्रुतेः। अथ चतुर्थम्। सोमं हरतीति सोमहृत् तस्मै। 'हग्रहोर्भश्छन्दसि' (पा. 8। 2। 32) इति हस्य भः। सोमाहरणकर्त्रे श्येनाय श्येनपक्षिरूपायै गायत्र्यै हे सोम, त्वां मिमे। 'गायत्री श्येनो भूत्वा दिवः सोममाहरत्' (6। 9। 4। 10) इति श्रुतेः। अध पञ्चमम्। रायस्पोषदे रा धनं तस्य पोषो वृद्धिः तं ददातीति रायस्पोषदास्तस्मै धनपुष्टिदात्रेऽग्नये हे सोम, त्वां मिमे ।।32।।

### त्रयस्त्रिंशी

**यत्ते॑ सोम दि॒वि ज्योति॒र्यत्पृ॑थि॒व्यां यदु॒राव॒न्तरि॑क्षे। तेना॒स्मै यज॑माना॒योरु रा॒ये कृ॒ध्यधि॑ दा॒त्रे वो॑चः ।।३३।।**

**अन्वय :** (हे सोम) दिवि यत् ते ज्योतिः, यत् पृथिव्यां, यत् उरौ अन्तरिक्षे, तेन अस्मै यजमानाय राये उरुकृधि दात्रे अधि वोचः।

**व्याख्या :** हे सोम! तुम्हारा जो तेज द्युलोक में है। तथा जो तेज पृथिवी में हैं, और जो विस्तीर्णअन्तरिक्ष में शरीररुपज्योति है, उसके प्रभावसे इस यज्ञकर्ता यजमान को धनादिऐश्वर्य से महान बना दो, और फलदाता इन्द्र से यह कहो कि यह यजमान सर्वविध सम्पन्न होवें।

यहाँ रखे गये सोम का स्पर्श किया जाता है।

**म० :** 'यत्त इति मितालम्भनमिति' (का. 9। 4। 9) मितस्योपांशुसवने' पंचवारं प्रक्षिप्तस्य सोमस्य स्पर्शं कुर्यादिति सूत्रार्थः। सोमदेवत्यः विपरीताबृहती आद्यतृतीयवष्टार्णौ द्वितीयतुर्थी द्वादशार्णौ पादौ सा विपरीता बृहतीं व्यूहेन द्वादशत्वम्। अस्य मन्त्रस्य श्रुतौ निदानमुक्तम् 'यदा सोमोदेवानां हविरभूत्तदा तिस्त्रः स्वतनुरेषु लोकेषु न्यदधादिति' (3। 9। 4। 12)। तासां तनूनामनेन मन्त्रेण प्राप्तिः क्रियते। हे सोम, दिवि

द्युलोके ते तव यज्योतिस्तेजः यश्च पृथिव्यां ज्योतिः उरौ विस्तीर्णे अन्तरिक्षे यत् ज्योतिः शरीरलक्षणं तेन तन्वाख्येन ज्योतिषा अस्मै यजमानाय। विभक्तिव्यत्ययः। अस्य यजमानस्य यज्ञे उरु विस्तीर्ण स्वशरीरं कृधि कुरु। राये धनाय ऋत्विजां दक्षिणाप्राप्तये च उरु शरीरं कृधि। किंच दात्रे अधि वोचः अधिकं ब्रूहि। यजमानाय कृत्स्नशरीरोऽहमागत इति वदेत्यर्थः। वचेर्लुङि 'वचेरुम्' (पा. 8। 4 20) इति उमागमेऽडभावे च वोच इति मध्यमैकवचने रूपम्। यद्वास्य मन्त्रस्यं व्याख्यान्तरम्। हे सोम, त्रिषुयत्वदीयं ज्योतिरस्ति तेन ज्योतिषास्मै यजमानाय राये। चतुर्थ्यर्थे तृतीया। राया धनेन समृद्धंकुरु विस्तीर्णं स्थानं कृधि। किंच दात्रे फलदायेन्द्राय इति वोचः ब्रूहि यत् अधि अधिकोऽयं यजमानो भवत्विति ॥33॥

## चतुस्त्रिंशी

**श्वात्रा स्थं वृत्रतुरो राधोंगूर्ताऽअमृतस्य पत्नीः। ता देवीर्देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत ॥३४॥**

**अन्वय :** (हे आपः) युयं श्वात्राः स्थ, वृत्रतुरः राधोगूर्ताः अमृतस्य पत्नीः, ताः देवीः इमं यज्ञं देवत्रा नयत उपहूताः सोमस्य पिबत।

**व्याख्या :** हे जल तुम शीघ्रगतिशील हो, और अज्ञानादि रुप आवरण के विनाशक, इष्टफलदाता जीवनामृतदायी सोम के पालक हो। ऐसे दिव्यगुणयुक्तजल तुम इस यज्ञ को देवताओं तक ले जाओं तथा आह्वान किये हुए तुम सोम का पान करो।

यहाँ रखे हुए सोम पर निग्राभ्या का जल छिड़का जाता है। आग्नीध्र के हाथ में रखे हुए होतृचमस में अध्वर्यु वसतीवरीसंज्ञक जल छोड़ता है, उसे निग्राभ्या कहा जाता है।

**म॰ :** 'श्वात्रा स्थेत्यासिञ्चति निग्राभ्या इति' (का. 9। 4। 12)। सोमस्योपरि होतुचमसेंनैव निग्राभ्या आसिंचतीति सूत्रार्थः। पथ्या बृहती तृतीयो द्वादशार्णोऽन्ये त्रयोऽष्टार्णाः पादा यस्याः सा पथ्याबृहती। इयं व्यधिका। हे आपः, यूयमेवंविधाः स्थ भवथ। किंभूताः। श्वात्राः। श्वात्रमिति क्षिप्रनाम। क्षिप्रकार्यकारिण्यः शिवा वा। वृत्रतुरः। तुर्वतिर्वधकर्मा, वृत्रदैतयं तूर्वन्ति हिंसन्ति ता वृत्रतुरः क्विपि 'राल्लोपः' (पा. 6। 4। 21) इति वलोपः। राधोगूर्ताः राधो धनं गुरन्ते उद्यच्छन्ति ददति ता राधोगूर्ताः। 'गुरी

उद्यमे' अस्मात् 'नसत्तनिषत्त-' (पा. 8। 2। 61)इत्यादिना कर्तरि क्तोनत्वाभावश्च निपात्यते। अमृतस्य सोमस्य पत्नीः पालयित्र्यः। हे देवीः देव्यः, तास्तथाविधा यूयमिमं यज्ञं देवत्रा देवान् प्रति नयत प्रापयत उपहूता अनुज्ञाताः सत्यो यूयं सोमस्य। कर्मणि षष्टी। सोमं पिबत ।।34।।

### पञ्चत्रिंशी

**मा भेर्मा संविंक्था ऊर्जं धत्स्व धिषणे वीड्वीसती व्वींडयेथामर्जेन्दधाथाम्। पाप्मा हतो न सोमः ।।३५।।**

**अन्वय :** (हे सोम) त्वं मा भेः, संविक्थाः, ऊर्जं धत्स्व। हे धिषणे! (द्यावापृथिव्यौ) वीड्वीसती वीडयेथाम् ऊर्जं दधाथाम् (यजमानस्य) पाप्पा हतः सोमः न।

**व्याख्या :** हे सोम तुम डरो मत, कम्पन मत करो, क्योंकि देवों की तृप्ति के लिए मैं तुम्हें अभिषुत करता हूँ। अतः रस को धारण करो। हे द्यावापृथिवी तुम दोनों दृढ़ होतेहुए अपनेआपको दृढ़ बनाओं। तथा इस सोम में रस प्रदान करो। इस प्रकार वज्ररुप इस पत्थर की स्तुति से यजमान का पाप ही नष्ट होता है, सोम नहीं।

यहाँ उपांशुसवननामक पत्थर से सोम पर प्रहार किया जाता है।

**म॰ :** 'मा भेरिति प्रहरतीति' (का. 9। 4। 14) उपांशुसवनेनाश्मना सोमं प्रहरेदिति सूत्रार्थः। अर्ध सौम्यंमर्धद्यावापृथिव्यम्। हे सोम, त्वं मा भेः मा भैषीः। शपो लुकिलङि रूपम्। मा संविक्थाः कम्पनं मा कृथाः। 'ओविजी भयचलनयोः' लुङि रूपम्। यतो देवतर्पणायाहं त्वामभिषुणोमि अत ऊर्जं धत्स्व रसं धेहि। एवंसोमं संबोध्य द्यावापृथिव्यौ संबोधयति। हे धिषणे हे द्यावापृथिव्यौ, युवां वीडु सती वीडयेथाम्। वीडुशब्दो दृढवचनः। दृढे सत्यौवात्मानं दृढं कुरुतम् अस्मादुद्यताद्ग्राव्णः। किंच ऊर्जं दधाथां रसं धत्तम् अस्मिन् सोमे। अनैन तु वज्रसंस्तुतेन ग्राव्णा यजमानस्य पाप्मा हतो न तु सोमः ।।35।।

### षट्त्रिंशी

**प्रागपागुदंगधराक्सर्वतंस्त्वा दिशऽआधांवन्तु। अम्ब निष्पंर समरीविंदाम् ।।३६।।**

**अन्वय :** (हे सोम) प्राक्, अपाक्, उदक्, अधराक् सर्वतः दिशाः त्वा आधावन्तु। (हे) अम्ब निष्पर, अरीः सम् विदाम्।

**व्याख्या :** हे सोम, पूर्व पश्चिम उत्तर और दक्षिण तत्तत् दिशाओं के अधिष्ठाता देवता चारों ओर से तुम्हें प्राप्त करने के लिए शीघ्र आवें। हे भूमिमाता सोम को रस से पूर्ण करो। सम्पूर्ण प्रजा इस यज्ञ को जाने तथा फल प्राप्त करे अर्थात यज्ञ में सहयोग प्रदान करते हुए फल प्राप्त करें।

**म० :** 'प्रतिवर्ग निग्राभं वाचयति होतृचमसेऽल्पान्शूनवधाय प्रागपागिति' (का. 9। 4। 20) प्रतिप्रहारवर्ग होतृचमसामर्थ्य स्तोकान्सोमांशून्निधाय प्रागपागिति ऋग्द्धयं निग्राभसंज्ञं यजमानं वाचयेदिति सूत्रार्थः। सोमदेवत्योष्णिक्। सोमो दिग्भिर्मिथुनमैच्छत्तश्च देवाः संपादितवन्तस्तदेतहऋचाभ्युक्तम्। हे सोम, प्राक् प्रागञ्चनाः अपाक् अपागञ्चनाःदक्षिणाः पश्चिमाश्च उद्क् उदगञ्चना उतराः अधराक् अधराश्चनाः एवं प्रागादयः सर्वा दिशः स्वस्वप्रदेशात्त्वा त्वामाधावन्तु आभिमुख्येन गच्छन्तु। परस्परं किं भाषमाणास्त्वामभिधावन्त्विति तदाह। हे अम्ब हे माता, निष्पर स्वैर्भागैः सोमं पूरय। 'पृ पालनपूरणयोः' विलरणव्यत्यये लोटि रूपम्। किं प्रयोजनमिति चेत्। अरौः अर्यः प्रजाः संविदा संविदताम् 'प्रजा वा अरीः' (3। 9। 4। 21) इति श्रुतिः। अस्माकं सोमसमागमं नानादिग्वासिनो जना जानन्त्वित्यर्थः। इति भाषमाणास्त्वामागच्छन्तु। 'विद् ज्ञाने' अस्माल्लाटि तडि प्रथमाबहुवचने 'आत्मनेपदेध्वनतः' (पा. 7। 1 ।4) इति झस्यादादेशे 'लोपस्त आत्मनेपदेषु' (पा. 7। 1। 41) इति तकारलोपे सवर्णदीर्घे विदामिति रूपम्। 'समो गम्' (पा. 1। 3। 29) इत्यादिना लङ् ।।36।।

### सप्तत्रिंशी

**त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम्। न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ।।३७।।**

**अन्वय :** हे अङ्ग देव! इन्द्र शविष्ठ! त्वं मर्त्यं प्रशंसिषः स्तोषि। (हे) मधवन् त्वद् अन्यः मर्डिता न अस्ति। इन्द्र ते वचः ब्रवीमि।

**व्याख्या :** हे शीघ्रप्राप्त होने वाले एवं बलवान इन्द्रदेव! तुम अपने भक्त या याजक को स्वयं प्रसन्न होकर उसे प्रशंसायुक्त बनाते हो।

हे इन्द्र, यजमान को सुख प्रदान करनेवाला आपसे अतिरिक्त दूसरा कोई नहीं है। हे इन्द्र इसीलिए मैं आपकी ही स्तुति करता हूँ या आप से ही याचना करता हूँ। यह मन्त्र जीव के अनन्यता का द्योतक है।

**म० :** इन्द्रदेवत्यः पथ्याबृहती गोतमदृष्टा। अंगेति क्षिप्रनाम। हे शविष्ट अतिशयेन बलवन् इन्द्र, देवःदीप्यमानस्त्वं मर्त्यं मनुष्यं यजमानं प्रशंसिषः प्रसंससि स्तौषि। समीचीनोऽयं यजमानो होता श्रद्धावानित्यादिस्तुति करोषित्यर्थः। 'शंसु हिंसास्तुत्योः' लिडर्थे लेट् मध्यमैकवचने सिबादेशः 'सिव्बहुलं लेटि' (3। 1। 34) इति सिप्प्रत्ययः तस्यआर्धधातृकस्येड्वलादेः (पा. 7। 2। 34) इति इडागमः 'लेटोऽडाटौ' (पा. 3।4।14) इति सिपोऽडागमः 'इतश्च लोपः परस्मैपदेषु' (पा. 3। 4। 97) इति सिपं इकारलोपः तस्य रुत्वविसर्गौ षत्वम्। प्रशंसिष इति रूपम् 'तिङतिङः' (7। 1 27) इति सर्वानुदात्वम्। किंच हे मघवन् हे धनवन् इन्द्र, मर्डिता 'मुड सुखने' मृडीति मडिता यजमानस्य सुखयिता त्वदन्यो नास्ति न विद्यते। अतो हे इन्द्र,ते तववाचः त्वमेव सुखयितेत्येवंरूपं त्वदीयं वचनमहं व्रवीमि वदामि ।।37।।

श्रीमन्महीधरकृते वेददीपे मनोहरे।
अभ्रादानाद्वाचनान्तः षष्टोऽध्यायः समीरितः ।।6।।

**इतिषष्ठोऽध्यायः**

# अथ सप्तमोऽध्यायः

## तत्र प्रथमा

**वाचस्पतये पवस्व वृष्णो अंशुभ्यां गभस्तिपूतः। देवो देवेभ्यः पवस्व येषां भागोऽसि ।।१।।**

**अन्वय :** (हे सोम) त्वं वाचस्पतये पवस्व (गच्छ) वृष्णःअंशुभ्याम् गभस्तिपूतः। हे सोम देव देवेभ्यः पवस्व, येषांभागोऽसि।

**व्याख्या :** हे सोमलता वाणी के पति एवं प्राणों को शक्तिप्रदान करने हेतु इस पात्र में जाकर शुद्ध हो जाओ। सम्पूर्ण कामनाओं को पूर्ण करने वाले अपने दो अंशुओं सहित सूर्य की किरणों से या हमारे हॉथों से पवित्र होकर दिव्यगुणवाले तुम देवताओं की तृप्ति के लिए शुद्ध बनो

जिनके तुम अंश हो।

इस अध्याय में ग्रहपात्रों के ग्रहण सम्बन्धिमन्त्र कहे गये है। इस मन्त्र में उपांशुग्रह का ग्रहण किया गया है। गृह्यते स्थाप्यते यस्मिन् इति ग्रहः। जिसमें सोमरस रखा जाए उसे ग्रह कहा जाता है। इन्हीं ग्रह पात्रों को ही यहाँ पर भिन्न-भिन्न नामों से कहा गया है।

**म० :** षष्ठेऽध्याये यूपसंस्कारादिसोमाभिषवपर्यन्ता मन्त्राउक्ताः। सप्तमे ग्रहग्रहणमन्त्रा उच्च्यन्ते। 'उपांशुं च गृह्यति वाचस्पतये देवो देवेभ्यो मधुमतीरिति' (का. 9। 4। 23) मन्त्रत्रयस्य प्रतीकोपादान्तत्रैकैकेन मन्त्रेणोपांशुग्रहमेकैकवारं गृह्णीयात्। उपयामगृहीतोऽसीति मन्त्रत्रस्यादौ योज्यम्। प्राणदेवत्या विराट् नववैराजत्रयोदशैर्नष्टरूपेति लक्षणान्नषट्रूपा विराट् नववैराजत्रयोदशैर्नषष्टरूपेति लक्षणान्नषटरूपा विराट् प्रथमोऽष्टार्णस्तेनैकोना। पूर्वोत्तरार्धयोरुपांशुग्रहस्य प्रथमद्वितीयग्रहणे क्रमेण विनियोगः। हे सोम, त्वं वाचस्पतये प्राणाय पवस्व गच्छ। 'पव गतौ'। 'प्राणो वै वाचस्पतिः' यद्वा पतये पालकाय वाचः वाचा विभक्तिव्यत्ययः देवार्थं मन्त्रेण शुद्धो भव। किंभूतस्त्वम् वृथाः वर्षितुस्तव सम्बन्धिभ्यामशुभ्यां तौ हि तत्र क्षिप्यते। (4। 1। 1। 9) इति श्रुतेरध्वर्योर्गभस्तिभ्यां पाणिभ्यांच पूतः। समासगतः पूतशब्दो विच्छिद्यांशुभ्यामित्यनेनापि योज्यः। द्वितीयं गृह्णाति। हे सोम, देवः सन् देवेभ्योऽर्थाय पवस्व प्रवृत्तिं कुरु। न हय यदेवो देवांस्तर्पयितुमलम्। केभ्यो देवेभ्यः। येषां देवानां त्वं भागोऽसि तान्प्रति गच्छेत्यर्थः ।।1।।

## द्वितीया

**मधुंमतीर्नऽइषंस्कृधि यत्तें सोमादांभ्यं नाम जागृंवि तस्मैं ते सोम सोमांय स्वाहा स्वाहोर्वुन्तरिंक्षमन्वेंमि ।।२।।**

**अन्वय :** (हे सोम) त्वं नः इषः (अन्नानि) मधुमतीः कृधि (कुरु) हे सोम! यत् ते जागृवि अदाभ्यं नाम ते तस्मै, सोमाय स्वाहा। उरु अन्तरिम् अन्वेमि।

**व्याख्या :** हे सोम तुम हमारे अन्नों को मधुर रस से युक्त बनाओं। हे सोम, जो तुम्हारा जागरणशील (स्फूर्तिदायी।) अहिंस्य (हानिरहित) प्रसिद्ध नाम (यश) है, ऐसे सोम के लिए आहुति प्रदान करता हूँ। मैं विस्तीर्णअन्तरिक्ष का अनुगमन करता हूँ। (इस यज्ञ धूम के साथ मैं भी

भावनामय शरीर से विशाल अन्तरिक्ष में पीछे पीछे चलता हूँ)

**म॰ :** तृतीयं गृह्णाति। लिंगोक्तदेवतम्। हे सोम, त्वं नोऽस्माक-मिषोऽन्नानि मधुमतीःमधुररसोपेताः कृधि कुरु। 'यत् इत्यात्तान्सोमे निदधाति' (का. 9। 4। 28) इति स्वीकृतानंशून्सोमे स्थापयेत्। सौम्यम्। हे सोम,ते तव अदाभ्यमहिंस्यम्। दभ्नोतिहिंसार्थः। जागृवि जागरणशीलं यन्नामास्ति सोमेति हे सोम, तस्मै तन्नामवते तुभ्यं सोमायस्वाहा दत्तमस्तु। 'स्वाहेत्युक्त्वोर्ध-न्तरिक्षमिति निष्क्रमणमिति' (का. 9। 4। 34) 'स्वाहेत्यक्षरद्वयमुक्त्वा निष्क्रमेत'। उरुविस्तीर्णमन्तरिक्षमन्वेमि अनुगच्छामि ।।2।।

### तृतीया

**स्वांकृतोऽसि विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवांशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् प्राणाय त्वा व्यानाय त्वा ।।३।।**

**अन्वय :** हे प्राणरुपोपांशुग्रह! (त्वं) विश्वेभ्य इन्द्रियेभ्यः दिव्येभ्यः पार्थिवेभ्यः स्वाङ्कृतः असि। मनस्त्वा अष्टु। हे सुभव! त्वां सूर्याय स्वाहा। त्वां देवेभ्यः, मरीचिपेभ्यः सम्मार्ज्मि। हे देव अंशों! यस्मै त्वा दूडे तत् सत्यम् उपरिप्रुता भंगेन हतः। असौ फट्। हे उपांशुपात्र! त्वा व्यानाय त्वा। आसादयामि।

**व्याख्या :** हे प्राणरुपउपांशुग्रह (सोम विशेष)तुम सम्पूर्ण इन्द्रियों के कल्याण के लिए एवं द्युलोक में तथा पृथिवी में स्थित, सभी प्राणियोंके सुख केलिए मेरे द्वारा स्वीकार किये गये हो। तुम स्वयं ही उत्पन्न हो। प्रजापति तुम्हें प्राप्त करें। हे उत्तमजन्मवाले ग्रह! सूर्य के निमित्त मैं तुम्हें स्वाहाकार पूर्वक हवि प्रदान करता हूँ। देवताओं की तृप्ति के लिए तुम्हें अर्पण करता हूँ। किरणों के रक्षक देवताओं के निमित्त मैं तुम्हें पारिधि में शुद्ध करता हूँ। हे देवस्वरूपसोमखण्ड! जिस विरोध को नष्ट करने केलिए तुम्हारी प्रार्थना की है वह सत्य हो। मर्यादाभंग करनेवाला द्वेषी नष्ट होकर विर्शीर्ण हो जाय। हे उपांशुपात्र! प्राण एवंव्यान देवता की प्रीति केलिए मैं तुम्हें प्राप्त होता हूँ। या अपने प्राण एवं व्यान के रक्षण केलिए तुझे ग्रहण करता हूँ।

**म० :** 'स्वांकृत इति हुत्वा पात्रमुन्मार्ष्टीति' (का. 9। 4। 37) उपांशुग्रहं हुत्वा पात्रमार्जनं कुर्यात्। ग्रहदैवतम्। 'प्राणो वा अस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातः' (41। 1। 22) इति श्रुतेरुपांशुग्रहः प्राण। हे प्राणरूपोपांशुग्रह, त्वं स्वांकृतो भवति। छान्दसो यलोपः। स्वयमुत्पन्नोऽसि। केभ्यः। विश्वेभ्यः सर्वेभ्यः इन्द्रियेभ्यः सकाशात् दिव्येभ्यः दिवि भवा दिव्या देवास्तेभ्यश्च सकाशात् पार्थिवेभ्यः पृथिवीभवेभ्यो द्विपदचतुष्पदेभ्यः सकाशात्स्वयमुत्पन्न इत्यनुवर्तते। यस्तत्वमेवमकृतकः स्वतन्त्रस्तं त्वां मनः प्रजापतिरष्टु व्याप्नोतु। 'अशूङ् व्याप्तौ' पदविकरणव्यत्ययः। 'प्रजापतिर्वै मनः प्रजापतिष्ट्वाश्नुताम्' (4। 1। 1। 22) इति श्रुतेः। शोभनोभव उत्पत्तिर्यस्य तत्संबोधनं हे सुभव उत्तमजन्मन् ग्रह, सूर्याय सूर्यार्थं त्वा त्वां स्वाहाकरेण जुहोमि। यद्वास्य होममन्त्रस्यायमर्थः। हे प्राणरूप ग्रह, त्वं स्वांकृतोऽसि मयास्वीकृतोऽसि। किमर्थम्। दिव्येभ्यः देवजन्मनि स्थितेभ्यः पार्थिवेभ्यः मनुष्यजन्मनि स्थितेभ्यः देवजन्मनि स्थितेभ्यः पार्थिवेभ्यः मनुष्यजन्मनि स्थितेभ्यः सर्वेभ्य इन्द्रियेभ्यः इन्द्रियाणां हितायेत्यर्थः। मनश्च तेषामिन्द्रियाणाम- धीशं त्वामष्टु व्याप्नोतु। हे सुभव प्राणरूपोपांशुग्रह। तादृग्रूपं त्वां बहिःप्राणरूपाय सूर्याय स्वाहाकारेण जुहोमि। 'आदित्यो ह वै ब्राह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णीत' इत्यार्थर्वणिकश्रुतेः सूर्यस्य बहिःप्राणत्वम्। स्वांकृतशब्देन प्राणरूपग्रहस्य स्वाधीनत्वं दिव्यपार्थिवशब्दाभ्यां च जन्मद्वयं विवक्षितमिति तित्तिरिणोक्तम्। 'स्वांकृतोऽसीत्याह प्राणमेव समकृत विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान् दधातीति'। 'प्रथमे परिधावुत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति' (का. 9। 4। 38)। पश्चिमस्थे परिधौसोमलिप्तमूर्ध्वाभिमुखं हस्तं कृत्वा प्रागभिमुखं यथा तथा मार्जनं कुर्यात्। दैवं यजुः। हे लेप, मरीचिपेभ्यः। मरीचिपालकेभ्यो देवेभ्योऽर्थाय त्वा त्वां परिधौ मार्ज्मि इति शेषः। 'वास उरोवाहुषु शिलष्टमंशुमभिचरन्जुहुयादेवांशविति' (का. 9। 4। 39)। वस्त्रादिषु शिलष्टो यः सोमांशुस्तमभिचारार्थं जुहुयात्। आभिचारिकं सोमांशुदेवतं यजुः। हे देव दीप्यमान हे अंशो सोमांशो, यस्मै बधाय त्वामीडे प्रार्थयामि। ईडिरध्येषणकर्मा। तत् वधकर्म सत्यमस्त्विति शेषः। उपरिप्रवते गच्छतीत्युपरिप्रुत्। प्रवतिर्गत्यर्थः। तेनोपरि आगतेन भङ्गेनामर्देनासाविति देवदत्तादिनामनिर्देशः। असौ द्वेष्यो हतो निहतः सन् फट् विशीर्णो भवतु। 'ञ्फिला विशरणे'। अस्य क्विबन्तस्यैतद्रूपम्। फलतीति फट् डलयोरैक्यम्।

स्वाहाकारस्थाने फडित्यभिचारे प्रयुज्यते। 'प्राण-य त्वेति पात्रासादनम्' (का. 9। 4। 41)। यस्मिन्प्रदेशे पूर्वमुपांशुपात्रं स्थापितं तत्रैव स्थापयेत्। हे उपांशुपात्र, प्राणदेवतासंतोषार्थं त्वाम् आसादयामीति शेषः। 'उपाशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति संस्पृष्टमिति' (का. 9। 4। 42)। येनाश्मना सोमोऽभिषुतः स उपांशुसवनस्तं हस्तेन प्रमृज्योदगाभिमुखग्रहसंलग्नं सादयेत्। हे उपांशुसवन, व्यानदेवताप्रीत्यर्थं त्वामासादयामि ।।3।।

## चतुर्थी

**उपयामगृंहीतोऽस्यन्तर्यंच्छ मघवन्पाहि सोमंम्। उरुष्य रायु एषों यजस्व ।।४।।**

**अन्वय :** ( हे सोम) त्वम् उपयामगृहीतः असि। हे मघवन् अन्तः यच्छ, सोमं पाहि, रायः उरुष्य इषः आयजस्व।

**व्याख्या :** हे सोमरस! तुम उपयामसंज्ञक छोटे कलश में रखे गये हो या उपयामग्रहद्वारा गृहीत हो। हे ऐश्वर्यवान् इन्द्र! इस सोम को अन्तर्ग्रहपात्र में ग्रहण करो, और सोम की रक्षा करो। पशुधन की रक्षा करो हमें अन्नादि भोज्यपदार्थों से सम्पन्न करो, जिससे हम यज्ञादि करते रहें।

**म॰ :** 'उदितेऽन्यतर्यामग्रहणमुपयामगृहीत इति' (का.9। 6। 1)। सूर्योदयानन्तरमन्तन्तर्यामग्रहं गृह्णीयात्। उपयामयतीत्युपयामो ग्रहस्तेन गृह्यत इत्युपयामगृहीतः पचाद्यच् चित्त्वादन्तोदात्तः। यमोडपरिवेषणे इति परिवेषणादन्यत्र मित्वा भवाद्वृद्धिः। तत्पुरुषो तुल्यार्थ (पा. 6/2/2) 'तत्पुरुषे तुत्यार्थ-' (पा. 6। 2।2) इति पूर्वपदस्वरं बाधित्वा 'थाथधञ्-' (पा. 6। 2। 2।) इति अजन्तस्यान्तोदात्तत्वम्। पुनस्तृतीयासमासे 'तत्पुरुषे तुल्यार्थ-' (प. 6। 2। 2) इत्यादिना तृतीयान्तस्य प्रकृतिस्वरत्वेन तदेव स्थितम्। हे सोमरस, त्वं तादृशोऽसि। हे मघवन् धनवन्निन्द्र, त्वं तादृशं रसमन्तर्ग्रहपात्रमध्ये यच्छ निगृह्णीष्व। यद्वा शत्रुभ्योऽन्तर्धानं व्यवधानं यथा तथा नियमय। ततः सोमं पाहि पालय। तथा रायो धनानि उरुष्य रक्ष। उरुष्यती रक्षणकर्मा। यद्वा 'पशवो वी रायः' (4। 1। 15) इति श्रुतेः पशून्रक्ष। आ इषो यजस्व इषोऽन्नानि आयजस्व समन्ताद्देहि। यद्वान्नप्रभवत्वादिषो लक्षणया प्रजाः। 'प्रजा वा इषः' (4। 1। 2। 15) इति श्रुतेः। ता यजस्व याजयस्व यायजूकाः कुरु। श्रुत्यैयं व्याख्यातत्वात् ।।4।।

### पञ्चमी

**अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम्। सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ।।५।।**

**अन्वय :** हे मघवन् इन्द्र! ते अन्तः द्यावापृथिवी दधामि, उरु अन्तरिक्षम् अन्तर्दधामि, अवरैः परैः देवेभिः सजूः अन्तर्यामे मादयस्व।

**व्याख्या :** हे धनवन् इन्द्र! प्राणरूप आपके भीतर से द्युलोक एवं पृथिवीलोक को अलग अलग धारण करता हूँ, तथा विस्तीर्ण अन्तरिक्ष को द्यावापृथिवी के मध्य में स्थापित करता हूँ। हे इन्द्र पृथिवी-स्थानीय एवं द्युस्थानीय देवताओं के साथ समान प्रीति युक्त होकर आप अन्तर्यामग्रह संज्ञक पात्र में स्थित सोम को ग्रहण कर तृप्त हों। यहाँ अन्तर्यामग्रह के ग्रहण की विधि प्रस्तुत है।

**म० :** मघवदेवत्या त्रिष्टुप्। अन्तर्यामग्रहण एव विनियोगः। हे मघवन्, ते तवानुग्रहात् द्यावापृथिवी अन्तर्दधामि व्यवधायिके करोमि। यद्वा हे अन्तर्याम, प्राणरूपापन्नस्य तवान्तः शरीरमध्ये द्यावापृथिव्यौ दधामि द्यावापृथिव्योर्मध्ये स्थापयामि। हे मघवन्धनवनिन्द्र, अवरैः पृथिवीस्थानैः देवेभिर्देवैः परैः द्युस्थानैश्च देवैः सजूः समानजोषणः समानप्रीतियुक्तः सन्नन्तर्यामे ग्रहे मादयस्व हर्षयस्वात्मानम्। यद्वा तृप्यस्व 'मद तृप्तौ चुरादिरात्मनेपदी। देवेभिरित्यत्र 'बहुलं छन्दसि' (पा. 8। 1। 10)इति ऐसोऽभावे 'बहुवचने झल्येत्' (पा. 8। 3। 103) इति एकारः ।।5।।

### षष्ठी

**स्वांकृतोसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य उदानाय त्वा ।।६।।**

**अन्वय :** (हे उपांशुग्रह!) त्वं विश्वेभ्यः इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः स्वांकृतोसि। मनः त्वा अष्टु। हे सुभव! त्वा सूर्याय स्वाहा, त्वा देवेभ्यः मरीचिपेभ्यः सम्मार्ज्मि। हे देव, अंशो! यस्मै त्वा इडे तत् सत्यम्। उपरिप्रुता भंगेन हतः असौ फट्। हे उपांशु पात्र! उदानाय त्वा सादयामि।

**व्याख्या :** हे प्राणरुपउपांशुग्रह! तुम सम्पूर्ण इन्द्रियों के कल्याण के लिए तथा द्युलोक में स्थित पृथिवी में स्थित सभी प्राणियों के सुख

के लिए मेरे द्वारा ग्रहण किये गये हो। प्रजापति तुम्हें प्राप्त करें। हे उत्तमजन्म वाले प्राणरुप उपांशुग्रह तुमको मैं सूर्यदेव के लिए हविप्रदान करता हूँ। हे लेप! मरीचि के (किरणों) के रक्षक देवों के लिए तुम्हें परिधि में शुद्ध करता हूँ। हे ग्रह, उदान के सन्तोष के लिए तुम्हें प्राप्त करता हूँ।

**म॰** : स्वांकृत इति निःशेषस्यैव होमस्तिष्ठतः। व्याख्यातः। 'प्रथमे च न्युब्जेन पाणिना प्रत्यगिति' (का. 9। 6। 4)। प्रथमे परिधावमुखहस्तेन प्रत्यक्संस्थं मार्ष्टि देवेभ्यस्त्वेति मन्त्रेण। व्याख्यातः। उदानाय त्वेति पात्रासादनम्। हे ग्रह, उदानसन्तोषार्थं त्वां सादयामि ॥6॥

**सप्तमी**

**आ वा॑यो भूष शुचिपा उप॑ नः सहस्र॑न्ते नियुतो॑ विश्ववार। उपो॑ ते अन्धो मद्य॑मयामि यस्य॑ देव दधिषे पू॑र्व्वपेय॑ वायवे॑ त्वा ॥७॥**

**अन्वय** : हे शुचिपाः वायो! नः उप आ भूष। हे विश्ववार! ते सहस्त्रं नियुतः ते उप उमद्यम् अन्धः अयामि। देव! यस्य पूर्वपेयं दधिषे त्वां वायवे (गृह्णामि)।

**व्याख्या** : हे पवित्रसोमपान करने वाले वायुदेवता। हे सर्वव्यापकवायु तुम्हारे पास हजारों वेगवान-अश्वादि वाहन हैं (उनके द्वारा हमारे यहाँ आओ)। तुम्हारे समीप तृप्तिकर सोम को समर्पित करता हूँ। (पहुँचाता हूँ) हे दिव्यगुणोपेत वायु, जिस सोम के पूर्वपान का आस्वाद तुम्हें ज्ञात है अथवा सर्वप्रथम सोमपान के अधिकारी तुम ही हो, वही सोम आपको अर्पित करते हैं। हे सोम तुम्हें वायुदेवता के लिए ग्रहण करता हूँ।

**म॰** : 'ऐन्द्रवायवं गृह्णात्या वायविति' (का. 9। 6। 5।)। वायुदेवत्या त्रिष्टुप् वसिष्टदृष्टा वायवे त्वेति यजुरन्ता। हे वायो, हे शुचिपाः शुचिं पवित्रं वषट्कृतमप्राप्तिमन्यदेवैः ईद्दशं सोमं पिबतीति शुचिपाः पवित्रसोमपान, त्वं नोऽस्माकमुप समीपे आ भूष आक्रमस्वागच्छेत्यर्थः। 'भूष अलंकारे' इह गत्यर्थः। केनाहं आक्रमे इति चेत्। सहस्त्रं ते नियुतो विश्ववार। विश्वं सर्वं वृणोति व्याप्नोति विश्वैर्वा व्रियते प्रार्थ्यते इति

विश्ववारस्तत्संबोधनम् हे विश्वार सर्वव्यापक, ते तव सहस्त्रं नियुतः सन्ति। 'नियुतो वायोः' इत्युक्तेर्नियुच्छन्देन वायुवाहनभूता मृगा उच्यन्ते। तवासंख्याता वाहनभूता मृगास्तैरागच्छेत्यर्थः। किंच मद्यं मदनीयं तृप्तिजनकमन्धः सोमलक्षणमन्नं ते तव उप समीपे एव अयामि गमयामि। सोमं ते समर्पयामीत्यर्थः। हे देव दीप्यमान वायो, यस्य सोमस्य पूर्वपेयं प्रथमवषटकारलक्षणं पूर्वपानं त्वं दधिषे धारयसि। दधातेर्लिटि रूपम्। एवं वायुं प्रार्थ्य सोममाह हे सोमरस, वायवे वायुदेवतार्थ त्वां गृह्णामीति शेषः ॥7॥

## अष्टमी

**इन्द्र॑वायू इ॒मेऽसु॒ता उप॒ प्रयो॑भि॒रा ग॑तम्। इन्द॑वो वामु॒शन्ति॒ हि। उ॒प॒या॒म गृ॑हीतोसि वा॒यवे॑ इन्द्रवा॒युभ्यां॑न्त्वै॒ष ते॒ योनिः॑ स॒जोषो॑भ्यान्त्वा ॥८॥**

**अन्वय :** हे इन्द्रवायू इमे सुताः (अभिषुताः) प्रयोभिःउप आगतंहि इन्दवः वाम् उशन्ति (कामयन्ते)। हे सोमरस! वायवे उपयामगृहीतः असिः। इन्द्रवायुभ्यां त्वां (गृह्णामि)। एष ते योनिः। अतः सजोषोभ्यां त्वा (सादयामि)

**व्याख्या :** हे इन्द्रवायूदेव आपके लिए ही यह सोम अभिषुत है। अतः आप अपने शीघ्रगतिवाले अश्वों द्वारा हमारे पास आइए। ये सोम रस आप दोनों की कामना करते हैं। हे सोमरस वायुदेव की प्रसन्नता के लिए "उपयाम्" पात्र में ग्रहण किये गये हो। हे सोम, इन्द्र और वायु की प्रसन्नता के लिए तुम्हें ग्रहण करता हूँ। हे पात्र् यह(पृथिवीरुप) एकदेश तुम्हारा स्थान है अतः समान प्रीतिवाले इन्द्रवायू के निमित्त तुम्हें स्थापित करता हूँ।

**म० :** 'अपगृह्य पुनरिन्द्रवायू इतीति' (का. 9। 6। 6।)। एकवारर्धमादाय पृथकृत्य पुनरैन्द्रवायवं गृह्णाति। ऐन्द्रवायवी गायत्री मधुच्छन्दोदृष्टा। उपयामेति यजुःसहितो मन्त्रः। हे इन्द्रवायु, युष्मदर्थमिमे सोमाः सुता अभिषुताः। प्रय इत्यन्न नाम। प्रयोभिः एतैः सोमरसरूपैरन्नै- निर्मितैरुप समीपे युवामागतमागच्छतम्। यद्वा प्रयःशब्द 'इण् गतौ' इति ध ातोः शतृप्रत्ययान्तस्य रूपम्। प्रतीति प्रयन्। इणो यण् तस्य भिसिपरे

तकारस्य छान्दसः सकारः तस्य रुत्वादौ प्रयोभिरिति सिध्यति। प्रयोभिः प्रयद्भिः शीघ्रैरश्वैरागच्छतम्। हि यस्मादिन्दवः सोमा वां युवामुशन्ति कामयन्ते तस्मादागच्छतमित्यर्थः। सोममाह हे सोमरस, त्वमुपयामेन पात्रेण गृहीतोऽसि वायवे वायुदेवतार्थं इन्द्रवायुभ्यांइन्द्रवायुदेवतार्थच त्वां गृह्णामीति शेषः। 'दशापवित्रेण परिमृज्यैष ते योनिरिति ग्रहसादनमिति' (का. 9। 4। 25)। दशापवित्रेण गृहीतं ग्रहं परिमृज्य पात्राद्बहिर्निर्गतं सोमं मार्जयित्वा एष ते योनिरिति मन्त्रेण ग्रहस्य सादनं करोति। वीप्सा सर्वग्रहार्था। इति सूत्रार्थः। हे पात्र, एष खरस्यैकदेशः ते योनिः तब स्थानम्। अतोऽत्र सजोषोभ्यां समानप्रतिभ्यामिन्द्रवायुभ्यामर्थं त्वां सादयामीति शेषः ।।8।।

## नवमी

**अयं वां मित्रावरुणा सुतः सोम ऋतावृधा। ममेदिह श्रुतꣳहवम्। उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ।।९।।**

**अन्वय :** (हे) मित्रावरुणौ (युवाम्) ऋतावृधौ स्थ। अयं सोमः वाम् (युवयोः) सुतः। इह मम् इत् हवं श्रुतम्। (हे सोमरस) उपयाम गृहीतोसि, त्वा मित्रावरुणाभ्याम् (गृह्णामि)।

**व्याख्या :** हे मित्र और वरुण देव आप दोनों यज्ञ का विस्तार करने वाले हैं। यह सोम आप दोनों के लिए अभिषुत है (निचोड़ा गया है) अतः इस यज्ञ में मेरी प्रार्थना को सुनिए। हे सोमरस, तुम मित्रावरुण ग्रह पात्र से गृहीत हो, अतः इनके निमित्त (मित्रावरुण की तृप्ति के लिए) ग्रहण करता हूँ।

**म० :** 'मैत्रावरुणमयं वामिति' (का. 9। 6। 7) मैत्रावरुणं ग्रहं गृह्णीयात्। मित्रावरुणदेवत्या गायत्री गृत्समददृष्टा यजुरन्ता। हे मित्रावरुणौ, विभक्तेराकारः। हे ऋतावृधा, ऋतं यज्ञं सत्यं वा वर्धयत इति ऋतुवृधौ ऋतस्य वर्धयितारौ वां युवयोरर्थायायं सोमः सुतः अभिषुतः तस्मादिहास्मिन् यज्ञे ममेत्। इत् एवार्थे। ममैव यजमानानां मध्ये ममैव हवमाह्वानं श्रुतं युवां श्रृणुतम्। हे सोमरस, त्वमुपयामेन मैत्रावरुणग्रहपात्रेण गृहीतोऽसि। मित्रावरुणाभ्यामर्थे त्वा त्वां गृह्णामीति शेषः ।।9।।

## दशमी

**राया वयꣳससवाꣳसो मदेम हव्येन देवा यवसेन गावः।**

**तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनिर्ऋतायुभ्यां त्वा ।।१०।।**

**अन्वय :** वयं राया ससवांसः सम्पन्नाः मदेम हृष्टाः स्याम, यथा हव्येन देवाः यवसेन गावः। हे मित्रावरुण! युवं ताम् अनपस्फुरन्तीं धेनुं विश्वाहा नः, धत्तम्। एष ते योनिः ऋतायुभ्यां त्वा सादयामि

**व्याख्या :** (जिस धेनु के घर में होने पर) हम लोग धनादि से सम्पन्न होकर ऐसे हर्षित होते हैं, जैसे हवि से देवगण प्रसन्न होते हैं। तथा हरी हरी घास से पशुसमूह प्रसन्न होते है। हे मित्रावरुण देवताओं, दूसरी जगह न भागने वाली उस गाय को सर्वदा के लिए हमकों प्रदान करो। हे ग्रह! यह तुम्हारा स्थान है। मित्रावरुण देवों की तृप्ति के लिए तुम्हें यहाँ स्थापित करता हूँ।

**म० :** 'पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति' (का. 9। 6। 7) मैत्रावरुणपात्रे कुशद्वयं व्यवधाय तत्र स्व सोमरसं क्षीरेण मिश्रीकुर्यात्। मित्रावरुणदेवत्या त्रिष्टुप् त्रसदस्यद्रष्टा। उत्तरार्धे तामिति तदःश्रवणादिह यदोऽध्याहारः। मन्त्रदृक्कामदुधां प्रार्थयते। यया धेन्वा गृहे सत्या वयं राया धनेन ससवांसः। 'वन षण संभक्तौ' इत्यस्य क्वसौ रूपम्। धनेन संभक्ताः संपन्नाः सन्तो मदेम हृष्टाः स्याम। कथमिव। हव्येनेव। यथा हविषा संभक्तादेवा हृष्यन्ति, अथ च यवसेन घासेन गवाह्निकादिना गावो हृष्यन्ति हे मित्रावरुणौ, युवं युवां तां धेनुं नोऽस्मभ्यं विश्वाहा सर्वदा धत्तं दत्तम्। किंभूतां धेनुम्। अनपस्फुरन्तीम्। स्फुरतिर्गत्यर्थः। अपस्फुरति पुरुषान्तरं गच्छतीत्यपस्फुरन्ती न अपस्फुरन्ती अनपस्फुरन्तीं ताम्। अनन्यगामिनीं दत्तमित्यर्थः। एष त इति सादनम्। हे ग्रह, एषते योनिः स्थानम् ऋतायुभ्यां मित्रावरुणाभ्यामर्थे त्वां सादयामीति शेषः। 'ब्रह्म वा ऋतं ब्रह्म हि मित्रो ब्रह्म ऋतं वरुण एवायुः' (4। 1। 4। 10) इति श्रुतेः ऋतशब्देन मित्रः आयुशब्देन वरुणः इति श्रुतिव्याख्या। पदकारस्तु ऋतयुभ्यामिति पदं कृतवान् तेन ऋतं सत्यं यज्ञंवा कामयेते तौ ऋतयू ताभ्यामृतयुभ्याम्।संहितायां दीर्घः। यज्ञमिच्छद्भ्यां मित्रावरुणाभ्यामित्यर्थः पदकारस्य ।।10।।

## एकादशी

**या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्।**

**उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ।।११।।**

**अन्वय :** हे अश्विनौ वाम् युवयोः या कशा वाक्, मधुमती सुनृतावती (वाक्) तया यज्ञं मिमिक्षतम्। (हे ग्रह) त्वम्) अश्विभ्यां उपयामगृहीतः असि। (हे अश्विग्रह) एष ते योनिः माध्वीभ्यां अश्विभ्यां त्वा (सादयामि)।

**व्याख्या :** हे अश्विनीकुमारों, आप दोनों की वाणी मधुर (सरस) प्रिय और सत्यज्ञान से युक्त है इसके द्वारा आप दोनों हमारे याग को सम्पादित करें। हे ग्रह! तुम अश्विनीकुमारों के लिए उपयामसंज्ञकपात्र में गृहीत है। हे ग्रह! यह तुम्हारा स्थान है, मधुब्राह्मण के अध्येता अश्विनीकुमारों के निमित्त में तुम्हें स्थापित करता हूँ।

**म॰ :** 'आश्विनं गृह्णात्यन्वारब्धे वा यावामिति' (का. 9। 7। 8)। यजमानेन्वारब्धे वाश्विनं ग्रहं गृह्णाति। आश्विनी गायत्रीमेधातिथिदृष्टा यजुरन्ता। हे अश्विनौ अश्विदेवौ, वां युवयोर्या कशा। कशेति वाक्नामसु पठितम्। मधुमती मधु ब्रह्म तद्वती मधुब्राह्मणोपनिषत्प्रशंसायुता। तथा सूनृतावती प्रियं सत्यं वचः सूनृतं तद्वती सत्यप्रियवचनोपेता। हे अश्विनौ, तया वाचास्मदीयं यज्ञं मिमिक्षतं 'मिह सेचने' सनन्तः। सेक्तुमिच्छतम्। निष्पादयतमित्यर्थः। हे ग्रह, त्वमुपयामेन गृहीतोऽसि अश्विभ्यामर्थे त्वां गृह्णामीति शेषः। (का. 9। 6। 8) साधयत्येष ते। हे ग्रह, एषते योनिः स्थानं माध्वीभ्यां मधुब्राह्मणाध्येतृभ्यामश्विभ्यामर्थे त्वां साद्यामीति शेषः। मधुब्राह्मणं यावधीयाते तौ माध्यौ ताभ्याम्। तद्धित ईप्रत्ययः। 'दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच' (4। 1। 4। 18) इति श्रुतेः ।।11।।

### द्वादशी

**तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम्। प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे। उपयामगृहीतो-ऽसि शण्डाय त्वैष ते योनिर्वीरतां पाह्यपमृष्टः शण्डो देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृष्टासि ।।१२।।**

**अन्वय :** (हे इन्द्र!) प्रत्नथा पूर्वथा विश्वथा, इमथा (त्वां स्तुमः) तं ज्येष्ठतातिं स्वर्विदं बर्हिषदं दोहसे। प्रतीचीनं वृजनं धुनिम् आशुं जयन्तं यासु अनुवर्द्धसे। [हे सोम] शण्डाय, उपयाम गृहीतः असि। एष

ते योनिः वीरतां पाहि। शण्डः अपमृष्टः शुक्रपा देवा त्वा प्रणयन्तु। (हे उत्तरवेदि) त्वम् अनाधृष्टा असि।

**व्याख्या** : हे इन्द्र! प्राचीनकाल के भृगु आदि ऋषियों की तरह पूर्वकालवर्ती ऋषिपुत्रों की भाँति, एवं इस समय के सभी यजमानों की भाँति हम तुम्हारी स्तुति करते हैं। क्योंकि तुम सबसे बड़े हो, स्वर्ग प्रदान करने वाले हो, यज्ञों में बर्हिरूप आसन पर विराजमान होने वाले तथा यज्ञ फल प्रदान करने वाले हो। इसके साथ प्रतिकूल आचरणवालें शत्रुओं पर चढ़ाई करने वाले हो, बलवान शत्रुओं को कपाने वाले, शीघ्र विजयप्रदान करने वाले हो। जिस यज्ञ की क्रियाओं में सोमरस का पान करके तुम वृद्धि को प्राप्त होते हो, उसका हम अनुष्ठान करते हैं। हे सोम! तुम्हें शुक्राचार्य के पुत्र शण्ड नामक असुरपुरोहित के लिए यह सोम कलश में गृहीत किया है। हे शुक्रग्रह यह तुम्हारा स्थान है, यजमान के वीरभाव की रक्षा करो। शण्ड का अपमार्जन कर दिया गया शुक्रनामक ग्रह में स्थित सोम को पीने वाले देव तुझे उन्नत करें। हे उत्तरवेदि तुम अतिरस्कृत हो।

इस मन्त्र में यज्ञ फलदाता के रूप में इन्द्र की स्तुति की गई है।

**म॰** : 'शुक्रं बैल्वेन वा तं प्रत्नथेति' (का. 9। 6। 10) बिल्वपात्रेण वैकंकतेन वा शुक्रं ग्रहं गृह्णाति। जगती वैश्वदेवी काश्यपावत्सार-दृष्टा द्वादशार्णश्चतुःपादा जगती उपयामेत्यन्ते यजुः। हे इन्द्र, त्वं यासु यज्ञक्रियासु अनुवर्धसे पुनः पुनः सोमपानेन वृद्धिं प्राप्नोषि तासु। वृजनमिति बलनाम। बलं बलवद्यज्ञफलं दोहसे क्षारयसि ददासीत्यर्थः। यजमानायेति शेषः। कथं दोहसे तत्र इष्टान्तमाह। प्रत्नथा। 'प्रत्तपूर्व-' (पा. 5। 3। 111) इत्यादिना थालप्रत्यय उपमार्थीयः। प्रत्नशब्दःपुराणवचनः चिरन्तनानां भृग्वादीनामिवफलं दोहसे। पूर्वथा पूर्वेषामिव ऋषीणांसाध्यादीनामिव। विश्वथा विश्वेषां सर्वेषामृषिपुत्राणामिव। इमथा इदानीन्तनानां यजमानानामिवास्य फलं दोहसे तं त्वं स्तुम इति शेषः। किंभूतं तम्। ज्येष्टतातिम् तननं तातिः विस्तारः। ज्येष्टा उत्कृष्टा तातिर्विस्तारो यस्य तम्। यद्वा 'वृकज्येष्टाभ्याम्-' (पा. 5। 4। 41) इत्यादिना प्रशंसायां तातिल्प्रत्ययः।प्रशस्तो ज्येष्टो ज्येष्ठेषु प्रशस्यो वा ज्येष्ठतातिः। तथा बर्हिषदं यज्ञेषु बर्हिषि सीदतीति बर्हिषदस्तम्। स्वर्विदम्। स्वः द्युलोकं वेत्ति जानातीति स्वर्वित्तम्। तत्र हि तस्य निवासः। प्रतीचीनमात्मनोऽभिमुखं धुनिम्। 'धुञ् कम्पने'। कम्पितारं

शत्रुणाम् आशुं शीघ्रं जयन्तं जेतव्यानि वस्तूनि। यद्वास्या ऋचोऽर्थान्तरम्। हे इन्द्र, यस्त्वं प्रतीचीनं प्रतिगमनमस्मत्प्रतिकूलं वृजनं वर्जनीयमालस्याश्रद्धादिकं दोहसे रिक्तीकरोषि विनाशयसि। 'दुह प्रपूरणे' प्रपूरणं रिक्तीकरणमिति क्षीरस्वामी। किंच यासु क्रियासु धुनि त्वदनुग्रहाच्छत्रून्कम्पयन्तमाशुं क्षिप्रकारिणं जयन्तं सम्यगनुष्ठानेन यजमानान्तराण्यतिशयानमेनं यजमानमनु सोमपानेन स्तुत्या च यः त्वं वर्धसे तासुक्रियासु तं त्वां स्तुम इति शेषः कथमिव। प्रत्नथा थाप्रत्यय उपमार्थः। प्रत्नाः पुरातना भृग्वादयो यथा त्वामस्तुवन् पूर्वथापूर्वे पित्रादय इव विश्वथा अतीताः सर्वे यजमाना इव इमथा इदानीन्तना वर्तमाना यजमाना इव वयं त्वां स्तुम इत्यर्थः। कीदृशं त्वाम्। पूर्वे पित्रादय इव विष्ठवथा अतीताः सर्वे यजमाना इव इमथा इदानीन्तना बर्तमाना यजमाना इव वयं त्वां स्तुम इत्यर्थः। कीदष्ठां त्वाम्। ज्येष्ठताति स्वार्थे तातिः। ज्येष्टमित्यर्थः। बर्हिषंदं यागे संनिहितत्वेन तिष्ठन्तम्। स्वर्विदं यजमानाय दातव्यं स्वर्गं वेत्ताति स्वर्विदं। एविमन्द्रमुक्त्वा सोममाह। हे शुक्रग्रह, त्वमुपयामेन गृहीतोऽसि षण्डाय शुक्रपुत्राय षण्ढनाग्म्नेसुराय वा त्वां गृह्वामीति शेषः। सादयत्येष ते। हे ग्रह, एष खरप्रदेशस्तव स्थानम्। त्वं यजमानस्य वीरतां वीरत्वं शूरत्वं पाहि पालय। 'शुकामन्थिभ्यां चरतः शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता प्रोक्षिताप्रोक्षितौ यूपशकलावादायापिधानं प्रोक्षिताभ्यामपमार्जनमप्रोक्षिताभ्यामपरमृष्टः षण्ड इत्यवध्वर्युरिति' (का. 9। 10। 1–5) अध्वर्युप्रतिस्थातारौ शुक्रामन्थिग्रहाभ्यां यथाक्रममनुतिष्ठेताम्। तत्प्रकारः। प्रोक्षिताभ्यांद्वाभ्यां यूपशकलाभ्यां सहाप्रोक्षितौ द्वौ यूपशकलावादाय प्रोक्षिताभ्यां तयोर्ग्रहयोः क्रमेणाच्छादनं कृत्वा प्रोक्षिताभ्यां ग्रहावपमृज्यात्। तत्र प्रोक्षितेन शकलेन ग्रहं पिधायाप्रोक्षितेनाध्वर्युः शुक्रग्रहमपमार्ष्टि इति सूत्रार्थः। आभिचारकं यजुः। शण्डनामकोऽसुरपुरोहितः शुक्रपुत्रेऽपमृष्टः अपमार्जनीकृतः। 'देवास्त्वेति निष्क्रामतो यथालिंगामिति (का. 9। 10। 6) अध्वर्युप्रतिप्रस्थातारौ यथाक्रमेण शुक्रमन्थीत्येतत्पदद्वयवाचक मन्त्रलिंगमन–तिक्रम्य हविर्धानमध्यान्निर्गच्छेताम्। तत्र शुक्रलिंगेनाध्वर्युनिष्क्रामति। शुक्रदैवतम्। शुक्रनामकग्रहस्थं सोमं पिबन्ति शुक्रपा देवाः हे शुक्रग्रह, त्वां प्रणयन्तु यजतिस्थानं प्रापयन्तु (का. 9। 10। 7)। अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजन्तो दक्षिणस्थामध्वर्युरुत्तरस्यां प्रतिप्रस्थाताना–धृष्टासीति। अध्वर्युप्रतिस्थातारौ वेदिपश्चाद्भागे अरन्ती संयोज्य ग्रहयोर्विसर्ग–कमकुर्वन्तौ उत्तरवेदिश्रोण्योर्ग्रहौ सादयतः दक्षिणश्रोणावध्वर्युः शुक्रम् उत्तरवेदिश्रोणौ प्रतिप्रस्थाता मन्थिनं सादयति। वेदिश्रोणिदैवतम्। हे उत्तरवेदिश्रोणे,

त्वमनाघृष्टानुपहिंसितासि ।।12।।

### त्रयोदशी

**सुवीरो वीरान्प्रजनयन्परीह्यभिरायस्पोषेण यजमानम्। संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा निरस्तः शण्डः शुक्रस्याधिष्ठानमसि ।।१३।।**

**अन्वय :** (हे शुक्रग्रह) (त्वं) सुवीरः वीरान् प्रजनयन् यजमानं रायस्पोषेण अभि परीहि=परितोगच्छ। हे शुक्र शुक्रशोचिषा दिवा पृथिव्याः संजग्मानः शण्डः निरस्तः (हे यूपकाष्ठ) त्वं शुक्रस्य अधिष्ठानम् असि।

**व्याख्या :** हे शुक्रग्रह! तुम उत्तमशौर्यभाव से सम्पन्न हो अतः यजमान के घर में वीरसन्तान के जन्म का वर देते हुए इसके यहाँ धन समृद्धि सहित पधारो। यह शुक्रग्रह अपनी शुभकान्ति से द्युलोक और भूलोक से मिलकर यूप को धारण करता है। शण्डनामक असुर निरस्त हुआ। (यज्ञ से बाहर निक्षिप्त कर दिया गया) हे यूपशकल! तुम शुक्र ग्रह के अधिष्ठान रुप हो।

यहाँ अध्वर्यु एवं प्रतिप्रस्थाता दोनों इस मन्त्र से यजमान को आशीर्वाद देते हैं।

**म० :** 'सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युरिति' (का. 9। 10। 8)। शुक्रदैवतम्। हे शुक्रग्रह, त्वं सुवीरः शोभनवीर्योपेतः सन् वीरान् यजमानस्य शौर्योपेतान्भृत्यादीन् प्रजनयनुत्पादयन् रायः पोषेण धनस्य पुष्ट्या यजमानमभिलक्ष्य परीहि परितो गच्छ। 'अपरेणं यूपमरत्नी संघातः संजग्मान इति यथालिंगमिति' (का. 9। 10। 10) अध्वर्युप्रतिप्रस्थातारौ यूपपश्चिमभागे तत्तद्ग्रहवाचकपदलिंगानतिक्रम्यारत्न्योः संधानं कुर्यातां शुक्रलिंगेनाध्वर्युः। शुक्रोग्रहः शुक्रशोचिषा शुद्धदीप्त्या कृत्वा यूयं बिभर्तीति शेषः। किंभूतः शुक्रः। दिवा द्युलोकेन पृथिव्या भूलोकेन च संजग्मानः सगच्छमानः। 'अप्रोक्षितौ निरस्यति निरस्तः शण्डइत्यध्वर्युरिति' (का. 9। 10। 12) अध्वर्युरप्रोक्षितं यूपशंकलं निरस्येत्। आभिचारकं शण्डनामकः शुक्रपुत्रेऽसुरपुरोहितः प्रास्यतः शुक्रस्याधिष्टानमित्यध्वर्युरिति' (का. 9। 10। 13) अध्वर्युराहनवीये प्रोक्षितं यूपशकलं क्षिपेत्। शकलदैवतम्। हे यूपशकल, त्वं शुक्रग्रहस्याधिष्ठानमधिकरणमसि ।।13।।

## चतुर्दशी

**अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम। सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽअग्निः ।।१४।।**

**अन्वय :** हे देव सोम! अच्छिन्नस्य सुवीर्यस्य ते, रायस्पोषस्य ददितारः दातारः स्याम। सा विश्ववारा संस्कृतिः प्रथमा। स वरुणः मित्रः अग्निः प्रथमः।

**व्याख्या :** हे दिव्यगुणगणसमन्वितसोम, अविच्छिन्न (अखण्डित) कल्याणमय प्रभाव वाले उत्तमंशक्तिप्रदान करने वाले, तुम्हारी कृपा से हम यज्ञादि में धनादि प्रदान करने वाले हों। इन्द्र के लिए यह सोमसंस्कार अत्यन्त प्रधान हैं, क्योंकि यह सोम सभी के द्वारा आदृत (वरणीय) है। यह सोम वरुण मित्र, अग्नि, आदि देवों का स्वामी है।

इस मन्त्र से शुक्रामन्थिग्रह होम का विधान किया गया है।

**म० :** 'अच्छिन्नस्येति जपित्वेति' (का. 9। 10। 14) यजमानो जपति। सौम्यम्। हे देव दीप्यमान सोम, अच्छिन्नस्य अनवखण्डितस्य संततस्य सुवीर्यस्य कल्याणप्रभावस्य ते तव ददितारः दातारः वयं स्याम भवेम। रायः पोषस्य धनपोषस्य च दातारः स्याम। भूयोभूयो यंज्ञकरणमाशास्यते। यद्वा ते तव प्रसादात् रायः पोषस्य ददितारः स्याम। अच्छिन्नेस्येति विषेशणद्वयं धनपोषस्यैव। 'उभयतो यूपं प्रत्ङ्मुखौ जुहुतः सा प्रथमेत्यध्वर्युः प्रथमं तमनु प्रतिप्रस्थातेति' (का. 9। 11। 1) अध्वर्युप्रतिप्रस्थातारौ यूपोभयपार्श्वयोः स्थित्वा पश्चिमाभिमुखौ सन्तौ जुहुयाताम्। अध्वर्युरादौ। शुक्रं प्रतिप्रस्थाता ततो मन्थिनं जुहोति। इन्द्रदेवत्य। त्रिष्टुप्। सा प्रथमा मुख्या संस्कृतिः सोमसंस्कारो यस्येन्द्रस्य क्रियते इन्द्रार्थं क्रियत इत्यर्थः। सोमक्रये सा देवि देवमच्छेहीन्द्राय सोममित्युक्तवात् (अध्या. 4 का. 20)। किंभूता संस्कृतिः। विश्ववारा विश्वैः सवैर्ऋत्विग्भिरनृत्विग्भिश्च व्रियते यत्र सोमः सा विश्वारा। यद्वा विश्वं वृणोति क्रियमाणः सोमो यत्रेति विश्ववारा जगदुत्पत्तिबीजत्वात्। सोमस्य वरुणो मित्रः अग्निश्च स प्रसिद्धो यस्य प्रथमो भृत्य इति शेषः। वरुणमित्राग्नयोऽन्येषामप्युपलक्षकाः। देवगणानां यः प्रभुरित्यर्थः ।।14।।

## पञ्चदशी

**स प्रथमो बृहस्पतिंश्चिकित्वांस्तस्माऽइन्द्राय सुतमाजुहोत स्वाहा ।। तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहाऽयांडग्नीत् ।।१५।।**

**अन्वय :** स प्रसिद्धः चिकित्वान् बृहस्पतिः प्रथमः इन्द्रस्य मुख्योमन्त्री तस्मैं इन्द्राय सुतम् सोमम् आजुहोत स्वाहा। याः मध्वः स्विष्टाः याःसुप्रीताः होत्राः तृपन्तु यत् सुहुताः स्वाहा। अग्नीत् अयाड् (अयाक्षीत्)।

**व्याख्या :** यह प्रज्ञासम्पन्न वाणियों का अधिष्ठाता बृहस्पति ही जिनके प्रमुख सहायक हैं, हे ऋत्विजों! ऐसे इन्द्र के लिए आप अभिषुत सोम का स्वाहाकार पूर्वक होम करें। यह आहुति उन्हे सन्तुष्ट करें जो मधुरसोम रस की अभिलाषा करने वाले है, जो प्रसन्न रहने वाले है (याजकों पर) ऐसे ऋतुओं के अभिमानी देवता भी इस होम से तृप्त हों। जिस सोम के निमित्त वे यहाँ बुलाये गये हैं उनके लिए यह स्वाहाकारपूर्वक आहुति है। आग्नीध्र ''याग होगया है'' ऐसा होता से कहता है।

**म० :** स प्रसिद्धः चिकित्वान् चेतनावानुत्कृष्टधीः बृहस्पतिः यस्येन्द्रस्य प्रथमो मुख्यो मन्त्री इति शेषः। यद्वा संस्कृतिः समीचीना कृतिर्विष्वैर्देवैर्वरणीया सा प्रथमा देवानां मध्ये मुख्या यस्येन्द्रस्य वरुणमित्राग्नयोपि स प्रथम इन्द्र एव। चिकित्वान् बृहस्पतिरपि स इन्द्र एव। हे ऋत्विजः, तस्मैतादृशायेन्द्राय सुतमभिषुतं सोमं स्वाहेति स्वाहाकारेणाजुहोत आभिमुख्येन जुहुत् स्वाहाकारेण होमं कुरुत। 'तृम्पन्त्विति जपतीति' (का. 9। 11। 9) होत्रदैवतम्। ताः होत्रः छन्द्रोभिमानिन्यो देवताः तृम्पन्तु तृप्ता भवन्तु। 'तृम्प प्रीतौ'। होत्रशब्देन याज्याच्छन्दांस्यभिधीयन्ते। ताः काः। याः मध्वो मधुनो मधुस्वादस्य सोमस्य शिष्टाः साधु इष्टाः तद्धोमे नियुक्तत्वात् याश्च होत्रः। सुष्ठु प्रीताः। कथंज्ञायन्ते। यद यस्मात् स्वाहाकारेण सुहुताः साधु हुताः। होमार्थं नियुक्ता इत्यर्थः। 'होतारं प्रत्यङ्ङुपसीदव्ययाडग्रीदिति' (का. 9। 11। 10)। अध्वर्युर्होतुसमीपे प्रत्यङ्मुखस्तिष्ठेत्। होतृदैवतम्। अग्रिरयाट् अयाक्षीत् अग्रिध्रा यागः कृत इति होतुः कथयति ।।15।।

## षोडशी

**अयं व्वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो व्विमाने।
इममपाᳮसंङ्गमे सूर्यस्य शिशुन्न व्विप्रा मतिभी रिहन्ति ।।
उपयामगृहीतोऽसि मर्काय त्वा ।।१६।।**

**अन्वय :** अयं ज्योतिर्जरायुः वेनः चन्द्रः रजसो विमाने पृश्निगर्भाः अपः अचोदयत् प्रेरयति। सूर्यस्य अपां संगमे इमं सोमं विप्राः शिशुं न मतिभिः रिहन्ति बालमिव स्तुवन्ति। (हे सोम) त्वम् उपयाम गृहीतः असि, त्वा मर्काय (गृह्णामि)।

**व्याख्या :** विद्युत्दीप्ति रुप जरायु से घिरा हुआ प्रकाशमान कमनीय सोमदेवता वर्षाऋतु आने पर सूर्यमण्डल में स्थित जल को बरसने के लिए प्रेरित करता है। सूर्य एवं जलों के संगम से जल लेकर अभिषुत हुए इस सोम को मेधावीजन बालक की तरह यथाबुद्धि वाणी से स्तवन करते है। हे सोम तुम उपयामग्रहपात्र में गृहीत हो। तुम्हें शुक्रपुत्र मर्कनामा (असुरों के पुरोहित) के निमित्त ग्रहण करता हूँ।

यहाँ देवता के रूप में सोम की स्तुति की गई है लता के रूप में नहीं।

**म० :** 'मन्थिनमयं वेन इति' (9। 6। 12)। मन्थिग्रहं गृह्णीयात्। त्रिष्टुप् अनयाधिदैवमधियज्ञं चावस्थितः सोमः स्तूयते। अधिदैवं चन्द्रात्मना स्तूयते। 'वेनो वेनतेः कान्तिकर्मणः' (नि. 10 । 38) इति यास्कः। 'विनि कान्तौ' इत्यस्य रूपम्। अयं वेनः कान्तश्चन्द्रो रजसो विमाने उदकं रज उच्यते। उदकस्य निर्माणकाले ग्रीष्मान्ते प्राप्ते पृश्निगर्भा अप चोदयत् चोदयति प्रेरयति वर्षति। किंभूतो वेनः। ज्योतिर्जरायुः ज्योतिर्विद्युल्लक्षणं जरायुवद्वेष्टनं यस्य स ज्योतिर्जरायुः इदानीमधियज्ञं लतात्मना सोमस्तूयते। विप्रा मेधाविनो ब्राह्मणाइमं सोमं शिशुंन शिशुमिव बालमिव मतिभिः मतिपूर्वाभिर्वाग्भिः रिहन्ति स्तुवन्ति। बालं यथा कश्चिल्लालयति तद्वंद्यं सोमं स्तोत्रशस्त्रंरुपाभिर्वाग्भिः स्तुवन्ति। रिहतिरर्चनकर्मसु पठितः। अर्चनं स्तवनमेव। किंभूतमिमम्। सूर्यस्यापां च संगमे गृहीताभिरद्भिरभिषुतमिति शेषः। सोमाभिषवार्थं वसतीवर्य आपो अपां सूर्यस्य च संगमे गृह्णन्ते 'ता वै वहन्तीनां स्यन्दमानानां गृह्णीयाद्दिवा गृह्णीयात्' इति श्रुतेः। यद्वायमर्थः। अपां सूर्यस्य संगमे निमित्ते उदकं सूर्यसमागमनिमित्तं वृष्टिर्भनिष्पत्त्यर्थं विप्रा इमं सोमं स्तुवन्ति यथा बालं कस्यचिद्वस्तुनो लाभाय यथा कश्चित्स्तौति।

ईदृश हे सोम, त्वमुपयामेन ग्रहपात्रेण गृहीतोऽसि। मर्कः शुक्रपुत्रेऽसुरपुरोहितस्तस्मै त्वां गृह्णामीति शेषः ।।16।।

### सप्तदशी

**मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता। आ यः शर्याभिस्तुविनृम्णो अस्या श्रीणीताऽऽदिशं गभस्तावेष ते योनिः प्रजाः पाह्यपमृष्टो मर्को देवास्त्वां मन्थिपाः प्रणयन्त्वनाधृष्टासि ।।१७।।**

**अन्वय :** द्रवन्तौ गच्छन्तौ विपः (विपश्चितौ) मेधाविनौ मनो नयेषु हवनेषु शच्या कर्मणा तिग्मं वनुथः व्याप्नुतः यः तुविनृम्ण गभस्तौ अस्य शर्याभिः आदिशम् अश्रीणीत। (हे मन्थिग्रह) एष ते योनिः प्रजा पाहि। मर्कः अपमृष्टः, मन्थिपाःदेवाः त्वां प्रणयन्तु। (हे यज्ञवेदि) त्वम् अनाघृष्टा असि।

**व्याख्या :** उत्साहपूर्वक स्फूर्ति से कार्य करने वाले (अध्वर्यु और प्रतिप्रस्थाता) उत्साह से सम्पन्न होनेवाले सोमरसयुक्त होमकार्यो में अपने कर्म के द्वारा शीघ्रता से (एक साथ शुक्र एवं ग्रन्थीग्रहों को) प्राप्त करते हैं। अधिक दक्षिणायुक्त अध्वर्यु हॉथ में लिए हुए इस सोमरस को अपने अंगुलियों द्वारा सभी ओर से सक्तु आदि हवि से मिला रहे हैं। (हे मन्थिग्रह) तुम्हारा यही स्थान है, तू प्रजाओं की रक्षा करो। मर्कासुर दूर भगा दिया। मन्थीग्रह नामक पात्रविशेषसे सोमपीनेवाले देवता तुमको यज्ञ स्थान में ले जायें। हे यज्ञवेदि! तुम अनुपहिंसित (अतिरस्कृत)हो।

इस मन्त्र से सोमरस में सत्तू मिलाकर होम किया जाता है।

**म॰ :** 'संक्तुभिः श्रीणात्येनं मनो न येष्विति' (का. 9। 6। 13)। एनं मन्थिग्रहं यवपिष्टैर्मिश्रीकुर्यात्। त्रिष्टुप् सोमस्तुतिः। विपः विपश्चितौ मेधाविनौ अध्वर्युप्रतिप्रस्थातारौ। विप, इत्यत्र छान्दसः प्रातिपदिकैकादेशलोपः। येषु हवनेषु सोमहोमेषु शच्या कर्मणा कृत्वा। शचीति कर्मनाम। मनो न मन इव तिग्मम्। 'तिग्मं तेजतेरुत्साहकर्मणः' (नि. 10। 6)। इति यास्कः। मनोवदुत्साहयुक्तं यथा तथा वनुथः। प्रथमपुरुषस्थाने मध्यमपुरुशः। वनुतः व्याप्नुतः युगपत् शुक्रामन्थिग्रहाविति शेषः। शच्येति निमित्ततृतीया वा। कर्मनिमित्तं व्याप्नुत इत्यर्थः। किंभूतौ। विपश्चितौ द्रवन्ता द्रवन्तौ गच्छन्तौ

हवनेषु तेष्वेव कर्तव्ये ] होमेषु प्रचरन्तौ। योऽध्वर्युः शर्याभिः अङ्गुलीभिर्गभस्तौ पाणौ स्थितस्यास्य मन्थिग्रहस्य। कर्मणि षष्ठी। इमं मन्थिनमार्दिशं प्रतिदिशमा अश्रीणीत समन्तात् श्रीणीते सक्तुभिर्मिश्रयति। किंभूतो यः। तुविनृम्णः तुवि नृम्णं यस्य बहुधनः महादक्षिणः। तुवीति बहुनाम। नृम्णामिति धाननाम। यद्यप्यत्रध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः सक्तुभिः श्रपणं करोति स एव प्रधान इत्याशयः एष त इति सादयति। हे मन्थिग्रह, ते तव एष योनिः प्रदेशः। त्वं प्रजाः यजमानसंवन्धिनीः पाहि पालय। 'अपमृष्टौ मर्क इति प्रतिप्रस्थातेति' (का. 9। 10। 15) प्रतिप्रस्थाता प्रोक्षितेन यूपशकलेन मन्थिनमाच्छाप्रोक्षितेनापमार्ष्टि। अपमार्जनीकृतो मर्को नामासुरपुरोहितः (का. 9। 10। 6) देवास्त्वेवेति निष्क्रामतो यथालिंगमिति। प्रतिप्रस्थाता हविर्धानान्नि क्रामेत्। मन्थिदैवतम् हे मन्थिग्रह, मन्थिनं ग्रहं पिबन्तीति मन्थिपाः देवाः त्वा प्रणयन्तु यजतिस्थानं प्रापयन्तु। अनाधृष्टासीति मन्त्रे विनियोगसहितः पूर्व व्याख्यातः ।।17।।

## अष्टादशी

**सुप्रजाः प्रजाः प्रंजनयन्परींह्यभि रायस्पोषेंण यजंमानम्। संजग्मानो दिवा पृंथिव्या मन्थी मन्थिशोंचिषा निरंस्तो मर्को मन्थिनोंऽधिष्ठानंमसि ।।१८।।**

**अन्वय :** (हं मन्थिग्रह) त्वं सुप्रजाः प्रजाः प्रजनयन् रायस्पोषेण यजमानम् अभि परीहि। (आगच्छ)। मन्थी मन्थीशोचिषा दिवा पृथिव्या संजग्मानः संगच्छमान यूपंबिभर्ति। मर्कः निरस्तः त्वं मन्थिनः अधिष्ठानम् असि।

**व्याख्या :** हे मन्थिग्रह तुम सुन्दरप्रजा से सम्पन्न हो। अतः प्रजोत्पादन का सामर्थ्य एवं प्रेरणा देते हुए धन की पुष्टि के द्वारा यजमान के सम्मुख आओ। यह मन्थी नामक ग्रह, द्युलोक और भूलोक से संगत होकर अपनी ही दीप्ति से यूप को धारण करता है। मर्कासुर भगा दिया गया । हे यूपशकल, तुम मन्थीग्रह के अधिष्ठान (आश्रय) हो।

**म० :** 'सुप्रजा इति प्रतिप्रस्थातोत्तरमिति' (का. 9। 10। 9)। प्रतिप्रस्थातोत्तरं यूपदेशं गच्छति। मन्थिदैवतम्। हे मन्थिग्रह, शोभना प्रजा यस्य स सुप्रजास्त्वं यजमानसंबन्धिनोः प्रजाः प्रजनयनुत्पादयन्सन् रायस्पोषेण

धनस्य पुष्ट्या सह यजमानमभि यजमानसंमुखं परीहि परिगच्छ आगच्छ। 'अपरेण यूपमरत्नी संधतः संजग्मान इति' (का. 9। 10। 10)। प्रतिप्रस्थातारत्नी संधत इत्युक्तम्। मन्थी नाम ग्रहो दिवा पृथिव्या द्युलोकभूलोकाभ्यां संजग्मानः संगच्छमानः सन्मन्थिशोचिषा मन्थिनः स्वस्यैव दीप्त्या यूपं बिभर्तीति शेषः 'निरस्तो मर्क इति प्रतिप्रस्थातेति' (का. 9। 10। 11)। प्रतिप्रस्थाता अप्रोक्षितं यूपशकलं निरस्येत्। आभिचारिकम्। मर्कनामासुरपुरोहितो निरस्तो निराकृत्ः। 'मन्थिन इति प्रतिप्रस्थातेति' (का. 9। 10। 12) प्रतिप्रस्थाता प्रोक्षितं यूपशकलमाहवनीये प्राक्षिपेत्। शकलदेवतम्। हे यूपशकल, त्वं मन्थिग्रहणस्याधिष्ठानमधिकरणमसि ।।18।।

## एकोनविंशी

**ये दे॑वासो दि॒व्येका॑दश॒स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ। अ॒प्सु॒क्षितो॑ मह्नि॒नैका॑दश॒ स्थ ते दे॑वासो य॒ज्ञमि॒मं जु॑षध्वम् ।।१९।।**

**अन्वय :** (हे) देवासः यूयं महिना दिवि एकादश स्थ, पृथिव्याम् अधि एकादश स्थ, अप्सुक्षितः एकादशस्थ, ते देवासः इमं यज्ञं जुषध्वम्।

**व्याख्या :** हे देवों! जो आप लोग अपनी महिमा से द्युलोक में एकादश संख्या में रहते हैं, पृथिवी के ऊपर एकादश संख्या में रहते हैं तथा अन्तरिक्ष में ग्यारह रुपों में निवास करते है। ऐसे (त्रिविध) आप इस सोमयज्ञ में आग्रयणग्रह का प्रसन्नतापूर्वक सेवन करें।

यहाँ अध्वर्यु इस मन्त्र से सोम की दो धाराओं में आग्रयण स्थाली में सोमग्रहण करता है।

**म० :** 'आग्रयणं द्वयोर्धारयोर्ये देवास इति' (का. 9। 6। 14)। धाराद्वये क्षरति सत्याग्रयणं ग्रहं गृह्णीयात्। वैश्वदेवी त्रिष्टुप् परुच्छेपदृष्टा। हे देवासः देवाः, ये यूयं दिविद्युलोके एकादश स्थ एकादशसंख्याका भवथ। केन। महिना महिम्रा स्वस्वमहिन्ना स्वस्वमाहात्म्येन। महिनेति पदं त्रिष्वपि स्थानेषु संबध्यते। सर्वत्र महाभाग्याविशेषात्। तथा पृथिव्यामधि पृथिव्युपरि एकादश स्थ। तथा ये यूयमप्सुक्षितः अन्तरिक्ष निवासिनः एकादश स्थभवय अप्स इति अन्तरिक्ष नामसु पठितम्। क्षियतिर्निवासार्थः। अप्सु अन्तरिक्षे क्षियन्ति निवसन्तीत्यर्थः। हे देवासः देवाः, ते त्रिविधा यूयमिमं यज्ञं यजनीयमाग्रयणग्रहं जुषध्वं सेवध्वम् ।।19।।

## विंशी

**उपयामगृंहीतोऽस्याग्रयणोऽसि स्वाग्रयणः पाहि यज्ञं पाहि यज्ञपंतिं विष्णुस्त्वामिंन्द्रियेणं पातु विष्णुं त्वं पांह्यभिसवंनानि पाहि ।।२०।।**

**अन्वय :** (हे आग्रयणग्रह! त्वम् उपयाम पात्रेण गृहीतः असि। आग्रयणोसि स्वाग्रयणः त्वं पाहि, यज्ञं, पाहि यज्ञपतिं। विष्णुः इन्द्रियेण त्वां पातु, त्वं विष्णुं यज्ञं पाहि, सवनानि अभिपाहि।

**व्याख्या :** हे आग्रयणग्रह! तुम उपयामसंज्ञक पात्र में गृहीत हो। तुम आगे-आगे ले जाये जाने के कारण आग्रयण नामवाले हो, तथा श्रेष्ठता को प्राप्त कराने वाले हो।यज्ञ की रक्षाकरो, यजमान की रक्षा करो। यज्ञाधिष्ठाता विष्णु अपने इन्द्रियों (सामर्थ्य) से तुम्हारी रक्षा करें। तुम विष्णुरुप यज्ञ की रक्षाकरो। प्रातःसवन, माध्यन्दिन सवन एवं तृतीय सवर्नो की सभी ओर से रक्षा करो।

**म० :** 'आग्रयणदेवतं यजुराग्रयणग्रहण एव विनियुक्तम्। हे आग्रयणग्रह, त्वमुपयामेन पात्रेण स्वीकृतोऽसि। आग्रयणोऽसि आग्रयणनामा भवसि। किंभूतस्त्वम्। स्वाग्रयणः अग्रस्य भावः आग्रम् सुष्टु आग्रं स्वाग्रं श्रेष्ठाम् अयति प्रापयतीति स्वाग्रयणः। अग्रशब्दस्यायतौ परे टिलोपः। तादृशस्त्वं यज्ञं पाहि रक्ष। यज्ञपतिं यजमानं च पाहि। विष्णुः यज्ञाधिष्ठाता देव इन्द्रियेण स्वसामर्थ्येन त्वां पातु। त्वमपि तादृशं विष्णुं पाहि रक्ष। सवनानि प्रातरादीनि अभि पाहि सर्वतो रक्षं ।।20।।

## एकविंशी

**सोमंः पवते सोमंः पवतेऽस्मै ब्रह्मंणेऽस्मै क्षत्रायास्मै सुंन्वते यजंमानाय पवत इष ऊर्जे पंवतेऽद्भ्यऽओषंधीभ्यः पवते द्यावांपृथिवीभ्यां पंवते सुभूतायं पवते विश्वैंभ्यस्त्वा देवेभ्यं एष ते योनिर्विश्वैंभ्यस्त्वा देवेभ्यंः ।।२१।।**

**अन्वय :** अयं सोमः पवते, अस्मैं, ब्रह्मणे अस्मै क्षत्राय अस्मै सुन्वते यजमानाय इषे ऊर्जे पवते, अद्भ्यः ओषधीभ्यः द्यावापृथिवीभ्यां सुभूताय विश्वेभ्यो देवेभ्यः त्वा गृह्णामि त्वा (सादयामि)। एष ते योनिः विश्वेभ्यः देवेभ्यः त्वा (सादयामि)।

**व्याख्या :** यह सोम ब्राह्मणजाति की प्रसन्नता के लिए क्षत्रिय जाति की प्रसन्नता के लिए (क्षात्रगुण विशिष्ट समाज के हित के लिए) इस सोमयाजी यजमान के लिए अन्नवृद्धि और क्षीरादिरसों की वृद्धिके लिए (यह सोम) ग्रहपात्रों में जाता है। यहसोम ब्रीहियवादि औषधियों के उत्पादन के लिए पात्रों में गति करता है। यह द्यावा (द्युलोक) एवं पृथिवीलोक के मंगल के लिए प्राणिसमुदाय या पंचमहाभूतों की तृप्ति के लिए एवं सभीदेवों की प्रसन्नता के लिऐ है। हे आग्रयणग्रह! तुम्हें ग्रहण करता हूँ। यह तुम्हारा स्थान है, सभी देवताओं की प्रसन्नता के लिए तुम्हें स्थापित करता हूँ।

**म० :** 'त्रिर्हिङ्कृत्य सोमः पवत इति' (का. 9। 6। 15) हिङ्कारत्रयं कृत्वा जपेदिति शेषः। वैश्वदेवत्यम्। सोमः पवते। पवतिर्गत्यर्थः। सोमो गच्छति ग्रहपात्रेषु स्वकीये कर्मणि प्रवर्तत इत्यर्थः। द्विरुक्तिरादरार्थः किमर्थम् अस्मै ब्रह्मणे ब्राह्मणजातिप्रीत्यर्थम्। अस्मै क्षत्राय एतर्त्क्षत्रियजाति-प्रीत्यर्थम्। अस्मै सुन्वते सोमाभिषवं कुर्वते यजमानाय कामप्राप्त्यर्थं पवते इषेऽन्नाय ऊर्जे तदुपसेचनाय क्षीरादये पवते निष्पत्त्यर्थमित्यर्थः। अद्भ्यो वृष्टिभ्यः ओषधीभ्यो ब्रीहियवादिभ्यस्तत्सिध्द्यर्थं पवते। द्यावापृथिवीभ्यां लोकद्वयप्रीणनाय पवते। किंवा बहुनोक्तेन। सुभूताय सर्वेषां साधुभवनाय पवते। हे आग्रयणग्रह, तादृशं त्वा त्वां विश्वेभ्यो देवेभ्यः सर्वदेवताप्रीत्यर्थं गृह्णामीति शेषः। एष त इति सादयति। हे ग्रह, एष ते योनिः स्थानं विश्वेभ्यः सर्वेभ्यो देवेभ्योऽर्थे त्वां सादयामीति शेषः ।।21।।

## द्वाविंशी

**उपयामगृंहीतोऽसीन्द्रांय त्वा बृहद्वंते वयंस्वत उक्थाव्यं गृह्णामि। यत्तंऽइन्द्रऽबृहद्वयस्तस्मैं त्वां विष्णंवे त्वे ष ते योनिंरुक्थेभ्यंस्त्वा। देवेभ्यंस्त्वा देवाव्यं यज्ञस्यायुंषे गृह्णामि ।।२२।।**

**अन्वय :** (हे) सोम) त्वम् उपयाम पात्रेण गृहीतः असि (हे उक्थ्यग्रह) उक्थाव्यं, बृहद्वते वयस्वते इन्द्राय गृह्णामि। हे इन्द्र! यत् ते बृहद्वयः तस्मै त्वा (गृह्णामि)। (हे सोम) त्वा विष्णवे (गृह्णामि)। एष ते योनिः उक्थेभ्यः त्वा (गृह्णामि) देवाव्यं त्वा देवेभ्यः यज्ञस्य आयुषे गृह्णामि।

**व्याख्या :** हे सोम तुम उपयाम पात्र से गृहीत हो। हे उक्थग्रह मैं मित्रावरुण ब्राह्मणाच्छंसी अच्छावाक् सम्बन्धी स्तोत्र शस्त्रों की रक्षा करने वाले, इन्द्र के लिए तुम्हें स्वीकार करता हूँ। जिन्हें बृहत्सामस्तोत्र अत्यन्त प्रिय है, या इस स्तोत्र से स्तुत होने वाले है। सोमरुप अन्नवाले या सदा नूतन वय में रहने वाले इन्द्र को प्रदान करने के लिए ग्रहण करता हूँ। हे इन्द्रदेव! प्रभूतसोम ही आपका अन्न हैं, इसे पीने के लिए आपसे प्रार्थना करता हूँ। हे सोम, मैं तुम्हें विष्णुदेव की प्रसन्नता के लिए ग्रहण करता हूँ। हे ग्रह! यह तुम्हारा स्थान है। मैं उक्थ के प्रिय देवों की तृप्ति के लिए तुम्हें ग्रहण करता हूँ। हे सोम! तुम देवों को तृप्त करने वाले हो, मैं तुम्हें यजमान की आयुवृद्धि के निमित्त ग्रहण करता हूँ।

**म० :** 'उक्थ्यमुपयामगृहीत इति' (का. 9। 6। 20) उक्थ्यं ग्रहं गृह्णीयात्। उपयामग्रहदेवतानि यजूंषि। हे सोम, त्वमुपयामेन पात्रेण गृहीतोऽसि। हे उक्थ्यग्रह, त्वा त्वामिन्द्रार्थं गृह्णामि स्वीकरोमि। किंभूतायेन्द्राय। बृहद्वते बृहत्सामतद्वते। बृहत्सामप्रियायेत्यर्थः। तथा वयस्वते वयः सोमरूपमन्नं तद्वते। यद्वा वयो यौवनलक्षणं वीर्यसमेतं सदा तद्वते। किंभूतं त्वाम्। उक्थाव्यं उक्थानि मित्रावरुणब्राह्मणाच्छस्यच्छावाकसंबन्धीनि शस्त्राणि अवति रक्षतीत्युक्थावीः तम्। तत्र ह्यस्य विनियोगः। किंच एवं सोममुक्त्वा इन्द्रमाह। हे इन्द्र, यत् ते तव बृहत् महत् वयोऽन्नं सोमरूपमस्ति तस्मैतत्पानार्थं त्वां प्रार्थये इति शेषः। हे सोम, विष्णवे विष्णुदेवतार्थं त्वां गृह्णामि। यद्वा हे इन्द्र यत् ते तव बृहत् महत् ऊर्जितंवयः यौवनलक्षणं तस्मै, सोम, त्वां गृह्णामि। अत्र च ते इन्द्रेति युष्मदामन्त्रिताभ्यां प्रत्यक्ष इन्द्र उच्यते। त्वेति युष्मदा सोम उच्यते। प्रत्यक्षतः तयोः सामर्थ्यं नास्ति। ततस्ते इत्यस्य पदस्य अस्येत्यनेन व्यत्ययः। इन्द्रेस्यस्येन्द्रस्येत्यनेन पदेन व्यत्ययः। ततश्चायमर्थः। हे सोम, यदस्येन्द्रस्य बृहद्वयः तस्मै त्वां गृह्णामि। विष्णवे यज्ञाय च त्वां गृह्णामि। एष त इति सादनम्। हे ग्रह, एष ते तव योनिः स्थानमुक्थेभ्योऽर्थाय त्वां सादयामीति शेषः। 'उक्थं विगृह्णाति त्रेधां देवेभ्यस्त्वेति सर्वेभ्यइति' (का. 9। 14। 8)। उक्थस्थालीस्थं सोम त्रेधा विभज्य गृह्णाति। सर्वेभ्यः प्रशास्तृब्राह्मणाच्छंस्यच्छावाकेभ्यस्तत्कृतयागार्थमित्यर्थः। हे सोम, देवेभ्योऽर्थाय त्वां गृह्णामि। किंभूतंत्वाम्। देवाव्यं देवानवति तर्पयतीति देवावीस्तम्। किमर्थम्। यज्ञस्यायुषे अनवच्छिन्ना कर्मैकदोषपरहिता परिसमाप्तिर्यज्ञस्यायुस्तस्मै यज्ञसमाप्तये फलपर्यन्तमवस्थानाय च गृह्णामि। यद्वा यज्ञो यजमानस्य

शरीरमिति यजमानस्यायुषे गृह्णामि ॥22॥

## त्रयोविंशी

**मि॒त्रावरु॑णाभ्यां त्वा देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामीन्द्रा॑य त्वा देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामीन्द्रा॒ग्निभ्यां॑ त्वा देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामीन्द्रा॒वरु॑णाभ्यां त्वां देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामीन्द्रा॒बृह॒स्पति॑भ्यां त्वा देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामीन्द्रा॒विष्णु॑भ्यां त्वा देवा॒व्यं॑ य॒ज्ञस्यायु॑षे गृह्णामि ॥२३॥**

**अन्वय :** (हे सोम) देवाव्यं त्वा मित्रावरुणाभ्यां यज्ञस्य आयुषे गृह्णामि। देवाव्यं त्वा इन्द्राय यज्ञस्य आयुषे गृहणामि्। देवाव्यं त्वा इन्द्राग्निभ्यां इन्द्रावरुणाभ्यां इन्द्राबृहस्पतिभ्यां इन्द्राविष्णुभ्यां यज्ञस्य आयुषे गृह्णामि।

**व्याख्या :** हे सोम! देवताओं को तृप्त करने वाले तुमको, मित्रावरुण के लिए एवं यज्ञ की फल प्राप्ति के लिए तुम्हारा ग्रहण करता हूँ। हे देवतृप्तिकर (सोम) इन्द्र की प्रसन्नता के लिए एवं याग की निर्विघ्नसमाप्ति के लिए तुम्हें ग्रहण करता हूँ। हे देवों के तर्पक, इन्द्र, अग्नि, इन्द्र, वरुण, इन्द्रबृहस्पति एवं इन्द्रविष्णु की तृप्ति के लिए तथा यजमान के दीर्घजीवन के लिए तुम्हें ग्रहण करता हूँ।

**म० :** 'मित्रावरुणाभ्यां त्वेति वा प्रशास्त्र इति' (9। 14। 9)। मैत्रावरुणायोक्थ्यविग्रहे मन्त्रविकल्पः। मित्रावरुणाभ्यामर्थे देवाव्यं देवतर्पकं त्वां यज्ञस्यायुषे गृह्णामि। एवं प्रतिप्रस्थतोत्तराभ्यामिन्द्राय त्वेति ब्राह्मणार्च्छंसिन इन्द्राग्निभ्यां त्वेत्यच्छावाकायेति' (का. 9। 14। 15) ब्राह्मणाच्छंस्यच्छवाकाभ्यां मन्त्रविकल्पावेवम्। इन्द्राय त्वां गृह्णामि इन्द्राग्रिभ्यामर्थे त्वां गृह्णामि। शेषं पूर्ववत्। 'उत्तरेष्विन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति' (का. 10। 7। 11) उक्थ्यादिसोमसंस्थेषु मैत्रावरुणादीनां तृतीयसवने उक्थ्यविग्रहमन्त्राः। इन्द्रावरुणयोरर्थे त्वां देवाव्यं यज्ञस्यायुषे गृह्णामि। एवमिन्द्रबृहस्पतिभ्यामर्थे त्वां गृह्णामि। इन्द्राविष्णुभ्यामर्थे त्वां गृह्णामि। मित्रावरुणाभ्यामित्यादौ 'देवताद्वन्दे च' (पा. 6। 3। 26) इति पूर्वपदान्तस्य दीर्घः ॥ 23॥

## चतुर्विंशी

**मूर्धानंन्दिवोऽअरतिम्पृंथिव्या व्वैश्वानरमृतऽआ जातमग्निम्।**
**कविंशं सम्राजमतिंथिं जनानामासन्ना पात्रं जनयन्त देवाः ।।२४।।**

**अन्वय :** देवाः अग्निं जनयन्तः दिवो मूर्धानं, पृथिव्याः अरतिं वैश्वानरम् ऋते यज्ञे आजातं उत्पन्नम् कविं सम्राजं जनानाम् अतिथिं जनानां आ पात्रम् आसन्। आस्ये मुखे आभिमुख्येन पीयते अनेन आपत्रम् ईदृशमग्निं अजनयन्त।

**व्याख्या :** देवताओं ने उस अग्नि को प्रकट किया जो सूर्य रुप से द्युलोक के शिरोमणि (उन्नत प्रदेश) के समान है, तथा अन्तरिक्ष में स्थित होकर यथा समय वृष्टि द्वारा जीवों का पोषण करता हैं वह अग्नि सभी मनुष्यों का (जठराग्नि के रुप में) हितैषी है तथा वैश्वानर नाम से प्रसिद्ध है। यही अग्नि यज्ञ में अरणिमन्थन द्वारा प्रकट होने वाला, क्रान्तदर्शी तथा सम्यक्प्रदीप्त होकर शोभित होने वाला है। लोगों के लिए अतिथि के समास पूज्य है। समस्त जीवों के रक्षक एवं विराट्पूरुष का मुखरुप है। वह अग्नि अपने मुख में चमस पात्र द्वारा आज्य पान करता है। ऐसे अग्नि को देवों ने उत्पन्न किया।]

यहाँ ध्रुवस्थाली से अध्वर्यु इस मन्त्र को पढ़कर ध्रुवग्रह का ग्रहण करत है

**म० :** 'ध्रुवं मूर्धानं दिव इति' (का. 9। 6। 21) ध्रुवसंज्ञं ग्रहं गृह्णीयात्। वैश्वानरदेवत्या त्रिष्टुम्भरद्वाजदृष्टा। वैश्वानरश्चात्र सर्वात्मना स्तूयते। देवा ईद्दशमग्निं जनयन्त उत्पादितवन्तः। अडागमाभाव आर्षःाकिंभूतमग्निम्। दिवो मूर्धानं द्युलोकस्य शिरोवदुन्नतप्रदेशे सूर्यरूपेणावस्थाय भासकम्। तथा पृथिव्या अरतिम् रतिरुपरतिस्तद्रहितम्। नहि पृथिव्या उपरि कदाचिदप्यग्निरु-परमते किंतु दाहपाकप्रकाशैः सर्वाननुगृह्वन् सर्वदा वर्तत एव। यद्वा पृथिवीशब्देनान्तरिक्षमुच्यते। आकाशं आपः पृथिवीत्यन्तरिक्षनामसु पठितत्वात् पृथिव्या अन्तरिक्षस्यारतिमलमति पर्याप्तमति पूरकमित्यर्थः। तत्र स्थितोऽसौ यथाकालं वृष्ट्या भूतानि पुष्णाति तथा वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितो वैश्वानरस्तम्। जठराग्निरूपेणान्नपाचकत्वात्। तथा ऋते यज्ञे यज्ञनिमित्तं आजातम् उत्पन्नमरणिद्वयात्। तथा कविं क्रान्तदर्शनं स्वभक्ताननुग्रही-तुमभिज्ञमित्यर्थः। तथा सम्राजं सम्यग्दीप्यमानमैश्वर्येण युक्तमित्यर्थः। तथा

जनानां यजमानानामतिथिं हविर्भिः सत्कारयोग्यम्। विज्ञायते हि अग्निरतिथि-रूपेण गृहान्प्रविशति तस्मात्तस्योदकमाहरन्ति। आसन् आपात्रम् आस्यशब्दस्य सप्तम्येकवचने 'पद्दन्न-' (पा. 6। 1। 63) इति सूत्रेणासन्-आदेशः 'सुपां सुलुक्' (पा. 71। 39) इति सप्तमीलोपः। आसन् आसनि आस्ये मुखे आपात्रम् आभिमुख्येन पीयतेऽनेनेत्यापात्रम्।'विज्ञायते हि चमसो देवपान इतिचमसेन ह वा एतेन भूतेन देवा भक्षयन्ति' (1। 4। 2। 14) इति श्रुतेः। ईदृशमग्निं देवा इन्द्रादयोऽजनयन्तेत्यर्थः ।।24।।

## पञ्चविंशी

**उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युताना-मच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वा। ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि। अथा नऽइन्द्रऽइद्विशोऽसपत्नाः समनसस्करत् ।।२५।।**

**अन्वय :** (हे सोम) त्वम् उपयाम गृहीतः असि। ध्रुवः असि ध्रुवक्षितिः ध्रुवाणां ध्रुवतमः अच्युतानाम् अच्युतक्षित्तमः। (हे ध्रुव) एष ते योनिः वैश्वानराय ध्रुवेण मनसा वाचा सोमम् अवनयामि। अथा इन्द्र इत् नः विशः असपत्नाः समनसः करत्।

**व्याख्या :** (हे सोम) तुम उपयामपात्र द्वारा गृहीत हो। ध्रुव नाम वाले हो, स्थिर निवासवाले हो, स्थिर पदार्थों में सबसे अधिक प्रतिष्ठित हो (अतिशयस्थिर हो)। अपने गुणों से च्युत न होने वाले पदार्थों में अच्युततम हो। हे ग्रह यह तुम्हारा स्थान है। समस्त प्राणियों के हित के लिए तुम्हें यहाँ स्थापित करता हूँ। स्थिर मन एवं वाणी से सोम का सिंचन करता हूँ। इन्द्र ही हमारी प्रजा को शत्रुओं से रहित तथा सुन्दरमन धैर्य से युक्त करें।

**म० :** ध्रुवदैवतं यजुः ध्रुवग्रहणे एव विनियुक्तम्। हे सोम, त्वमुपयामेन पात्रेण गृहीतोऽसि ध्रुवोऽसि ध्रुवनामकोऽसि। कीदृशस्त्वम्। ध्रुवा स्थिरा क्षितिनिवासो यस्य स ध्रुवक्षितिः। 'क्षि निवासगत्योः' स्थिरनिवासः आ वैश्वदेवीशंसनप्रस्थानात्। तथा ध्रुवाणामदित्यस्थाल्यादीनां मध्ये ध्रुवतमः अतिशयेन स्थिरः। तथा अच्युतानां च्युतिरहिताश्च क्षरणशून्यानां मध्ये अच्युतक्षित् अतिशयेनाच्युतक्षित् अच्युतक्षित्तमः। एष त इति सादनम्। हे ग्रह, एष ते योनिः स्थानं वैश्वनरायाग्नये त्वां त्वां सादयामि।

'ध्रुवहोतृचमसेऽवनयति ध्रुवं ध्रुवेणेति'। ध्रुवपात्रस्थं सर्वं सोमं होतृचमसे सिञ्चेत्। बृहती पूर्वोऽर्धर्चो ध्रुवदैवतः उत्तर ऐन्द्रः। प्रथमतृतीयावष्टाक्षरौ पादौ द्वितीयचतुर्थौ दशाक्षरौ सा बृहती 'वैराजौ गायत्रौ च' इति पिङ्गलोक्तेः। ध्रुवेणैकाग्रेण मनसा वाचा तन्मन्त्रोचारणप्रवणया ध्रुवं ध्रुवग्रहेऽवस्थितं सोममवनयामि होतृचमसेऽवसिञ्चामि। यद्वा धुवं ग्रहं सोमं होतृचमसस्थं प्रत्यवनयामि। अथा अनन्तरमिन्द्र इत्। इदेवार्थे। इन्द्र एव नोऽस्माकं विशः प्रजाः ईदृशीः करत् 'इतश्च लोपः परस्मैपदेषु' (पा. 3। 4। 97) इतीलोपः 'लेटोऽडाटौ' (पा. 3। 4। 94) इत्यडागमः। कीदृशीविशः। असपत्नाः नास्ति सपत्नो यासां ताः सपत्नरहिताः शत्रुशून्याः। तथा समनसः समानं मनो यासां ताः स्थिरमनस्काः धृतियुक्ता इत्यर्थः ।।25।।

## षड्विंशी

**यस्ते॑ द्र॒प्स स्कन्द॑ति॒ यस्ते॑ अ॒ꣳशुर्ग्राव॑च्युतो धि॒षण॑योरु॒पस्था॑त्। अ॒ध्व॒र्योर्वा॒ परि॑ वा॒ यः प॒वित्रा॒त्तन्ते॑ जुहोमि॒ मन॑सा॒ वष॑ट्कृत॒ꣳस्वाहा॑ दे॒वाना॑मु॒त्क्रम॑णमसि ।।२६।।**

**अन्वय** : (हे सोम) ते यो द्रप्सः स्कन्दति, यस्ते अंशुः ग्रावच्युतः अधिषवणयोः उपस्थात् वा अध्वर्यों वा यो यः पवित्रात् परिं पवित्रे ते तं मनसा वषट् कृतं जुहोमि स्वाहा। (हे चात्वाल!) त्वम् देवानाम् उत्क्रमणम्, असि।

**व्याख्या** : हे सोम तुम्हार जो रस (की बूंद) भूमि पर गिर गया है, तुम्हारा जो अंश (खण्ड) पत्थर (सिलवट) पेषण काल में च्युत होकर इधर-उधर विखर गया है, या जो अंश अधिषवणफलक के उत्संग से गिर गया है, या अध्वर्यु के प्रमादवश नष्ट हो गया है, अथवा जो अंशु, छानननी (पवित्री) में से इधर उधर गिर गया है। [अर्थात जहाँ कहीं से भी तुम्हारा जो अंश गिर गया है] तुम्हारे उन सभी अमूल्य अंशों को मन से ग्रहण करके वषट्कार पूर्वक और स्वाहाकार पूर्वक हवन करता हूँ। हे चात्वाल! तुम देवों के सोपान स्वरुप हो (तुम्हारे द्वारा ही देवगण स्वर्ग को गमन करते हैं।]

इस मन्त्र में विप्रुड्होम का विधान है। सोभाभिषण काल में सोमग्रहण के समय जो सोमरस पृथिवी पर गिर जाता है उसी दोष की

निवृत्ति के लिए यह होम किया जाता है।

**म॰ :** 'यस्त इति विप्रुषाहोमं जुह्वतीति' (का. 9। 6। 27) अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात्तप्रत्यवायपरिहाराय घृतहोमस्य विप्रुडढोम इति संज्ञा तमध्वर्यादयो जुह्वति। सौमी त्रिष्टुप् स्वाहेति यजुरन्ता देवश्रवोदृष्टा। हे सोम, ते तव यो द्रप्सः रसैकदेशः स्कन्दति भूमावन्यत्र वा पतति। यश्च ते तवांशुः खण्डः। ग्रावच्युतः ग्राव्णः सकाशात्पतितः। यश्च अधिषवणयोः अधिषवणफलकयोरुपस्था-दुत्संगात्स्कन्दति। वा अथवा य अंशुरध्वर्योः सकाशात्स्कन्दति। वाथवा यः अंशुः पवित्रात्परिस्कन्दति। यतः कुतश्चित्परिस्कन्दतीति भावः। हे सोम, ते तव तं द्रप्समंशुं च स्वाहाकारेण जुहोमि। किंभूतं तम्। मनसा वषट्कृतं संकल्पितं वषड्कारेण च स्वाहाकरेण च जुहोमीत्यर्थः। 'अन्यतरतृणं चात्वाले प्रास्यतीति (का. 9। 6। 32)। अध्वर्युणा वेदार्थे तृणे गृहीते तयोरेकं चात्वाले क्षिपेत्। चात्वालदैवतम्। हे चात्वाल, त्वं देवानामुत्क्रमणसि उत्क्रामन्ति गच्छन्ति स्वर्ग यस्मात्तदुत्क्रमणं देवास्त्वत्तः स्वर्गं गच्छन्ति 'अतो हि देवाः स्वर्गमुपोदक्रामन्' (4। 2। 4। 4) इति श्रुतेः ।।26।।

## सप्तविंशी

**प्राणायं मे वर्चोदा वर्चसे पवस्व व्यानायं मे वर्चोदा वर्चसे पवस्वोदानायं मे वर्चोदा वर्चसे पवस्व व्वाचे मे वर्चोदा वर्चसे पवस्व क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व श्रोत्रांय मे वर्चोदा वर्चसे पवस्व चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम् ।।२७।।**

**अन्वय :** (हे उपांशों) त्वं वर्चोदाः मे प्राणाय वर्चसे पवस्व प्रवर्तस्व। में व्यानाय वर्चसे पवस्व, मे उदानाय वर्चसे पवस्वं मे वाचे वर्चसे पवस्य में क्रतूदक्षाभ्यां वर्चसे पवस्व, में श्रोत्राय चक्षुर्भ्यां वर्चसे पवेथाम्।

**व्याख्या :** हे उपांशु! तुम स्वभाव से ही तेज के प्रदाता हो, तुम मेरे प्राणवायु के लिए तेज प्रदान करो (मेरे प्राणों में तेज भरने के लिए उद्योग करो) मेरे व्यानवायु में तेजस्विता का संचार करो। मेरे उदानवायु (कण्ठस्थित वायु) में तेज का संचार करो। मेरी वाणी में तेजस्विता का संचार करो। मेरे सामर्थ्य एवं निपुणता में बल का संचार करो। (हे

शुक्रामन्थिनौ) आप दोनों मेरे श्रवणेन्द्रिय और नेत्रों में तेज प्रदान करें।

इन मन्त्रों की अवकाश संज्ञा है। इनसे दस पदार्थों का अवेक्षण होता है।

**म०** : 'ग्रहानवेक्षयति यथागृहीतमवकाशान् वाचयन् प्राणायाम इति प्रतिमन्त्रमिति (का. 9। 7। 9) प्राणायेत्यादयो मन्त्रा अवकाशसंज्ञास्तान्वाचयेत्। ग्रहणक्रमेण ग्रहान्यजमानं दर्शयति। लिंगोक्तदेवतान्येकादश। यज्ञस्यैते प्राणास्तान्प्राणरूपेण दर्शयति। हे उपांशो, यस्त्वं स्वभावत एवं वर्चोदाः तेजसो दाता सः त्वं मे मम प्राणाय हृदयस्थितवायोर्वर्चसे पवस्व प्रवर्तस्व। उपांशुसवनम्। व्यानाय मे सर्वशरीरगतवायवे पवस्व। अन्यत्पूर्ववत्। अन्तर्यामं कण्ठदेशस्त्थो वायुरुदानः ऐन्द्रवायवम्। वागिन्द्रियाय मैत्रावरुणम्। क्रतुः कामः दक्षस्तस्य समृद्धिः तद्रूपसाधनरूपाय पवस्व प्रवर्तस्व। आश्विनं श्रोत्राय श्रोत्रेन्द्रियाय। शुक्रामन्थिनौ युगपत् हे शुक्रामन्थिनो, मे मम चक्षुषोः पाटवाय तद्रूपाय वर्चसे युवां पवेथां प्रवर्तेथाम् ।।27।।

### अष्टाविंशी

**आत्मनें मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वायुंषे मे वर्चोदा वर्चसे पवस्व विश्वाभ्यो मे प्रजाभ्यों वर्चोदसौ वर्चसे पवेथाम् ।।२८।।**

**अन्वय** : (हे आग्रयणग्रह!) त्वं वर्चोदाः में आत्मने जीवस्य स्वास्थ्याय वर्चसे पवस्व। में ओजसे वर्चसे पवस्व, में आयुषे वर्चसे पवस्व वर्चोदसौ में विश्वाभ्यः प्रजाभ्यः वर्चसे पवेथाम्।

**व्याख्या** : हे आग्रयणग्रह तुम तेज प्रदान करने वाले हो, मेरे अपने व्यक्तित्व या स्वास्थ्य के लिए तेज प्रदान करो। मेरे शरीर में ओज बढ़ाने के लिए उद्योग (प्रयत्न) करो। मेरी आयु तथा कान्ति को बढ़ाने के लिए प्रयत्न करो। हे तेज के दाता पूतभृत् और आहवनीय तुम दोनों मेरी सम्पूर्ण सन्तति को तेजस्वी बनाओं।

**म०** : आग्रयणम्। ममात्मने जीवस्य स्वास्थ्याय वर्चसे पवस्व उक्थ्यम्। ओजः सर्वेन्द्रियपाटवं शरीरं बलं वा तद्रूपाय वर्चसे पवस्व। ध्रुवम् आयुर्निर्दुष्टजीवनं तद्रूपाय वर्चसेपवस्व। पूतभृदाहवनीयौ युगपदवेक्षते।

हे पूतभृदाहवनीयौ, सर्वाभ्यो मम प्रजाभ्यः प्रजार्थ यद्वर्चस्तेजस्तदर्थं युवां पवेथाम्। किंभूतौ युवाम्। वर्चो दत्तस्तौ वर्चोदसौ। सर्वत्र ददातेरसुन्प्रत्ययः। यद्वात्र प्राणायेत्यादिचतुर्थीनां षष्ठ्या विपरिणामः। प्राणव्यानादीनां यद्वर्चस्तदर्थ पवस्वेत्यर्थः। यद्वा यस्तं प्राणाय वर्चोदाः स मे वर्चसे ब्रह्मवर्चसाय पवस्व एवं सर्वत्र ।।28।।

## एकोनत्रिंशी

**कोऽसि कतमोऽसि कस्यासि को नामासि। यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम। भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳसुवीरो वीरैः सुपोषः पोषैः ।।२९।।**

**अन्वय :** (हे द्रोणकलश!) त्वं कोऽसि कतमः असि, कस्यासि को नामा असि, ते यस्य नामा मन्महि, यं त्वा सोमेन अतीतृपाम्। तर्पितवन्त। हे भूर्भुवः स्वः प्रजाभिः सुप्रजाः स्याम, वीरैः सुवीरः पोषैः सुपोषः (भवेयम्)।

**व्याख्या :** हे द्रोणकलश! तुम प्रजापति हो, तुम्हीं अतिशयेन प्रजापति हो, प्रजापति से सम्बद्ध हो तुम प्रजापति नाम वाले हो, हम तुम्हारे जिस नाम को जानते हैं, ऐसे द्रोणकलशरुप तुम्हें सोम से तृप्त करते हैं ऐसे प्रजापति रूप तुम हमारी कामनाओं को पूर्ण करो। हे भूमि, अन्तरिक्ष एवं द्युलोक के अधिष्ठाता अग्नि वायु एवं सूर्य, देवताओं! आपके अनुग्रह से सुन्दर प्रजा (अच्छी सन्तान) वाला बनूँ। वीरपुत्रवान् एवं उत्कृष्टधन सम्पत्ति से ऐश्वर्यशाली होऊँ।

यहाँ 'क पद में प्रजापति विवक्षित है।' को वै प्रजापतिः

**म॰ :** 'कोऽसीति द्रोणकलशमिति' (का. 9। 7। 14)। द्रोणकलश-मवेक्षते। प्राजापत्या वर्धमानोष्णिक्। यस्याः प्रथमः पादः षडक्षरो द्वितीयः सप्ताक्षरस्तृतीयोऽष्टार्णश्चतुर्थो नवाक्षरः सा त्रिंशदूर्ना वर्धमानोष्णिक्। अध्यस्तप्रजापति द्रोणकलशमाह हे द्रोणकलश, त्वं कः प्रजापतिरिति। कतमोऽतिशयेन प्रजापतिरसि। तथा कस्य प्रजापतेरसि। को नाम प्रजापतिनामासि। प्रजापतेरनन्यभूतोऽसीत्यर्थः किंच वयं यस्य ते तव नाम अगन्महि विजानीमः 'मन ज्ञाने'। च पुनर्यं द्रोणकलशरूपं त्वां वयं सोमेन

अतीतृपाम तर्पितवन्तः स त्वमस्मान् विदितनाम्नः कुरु तर्पय च कामैरिति शेषः। 'भूर्भुवः स्वरिति जपतीति' (का. 9। 7। 5) हे भूर्भुवःस्वः अग्निवायुसूर्याः, प्रजाभिः अहं सुप्रजाः शोभनप्रजायुक्तः स्यां भवेयम्। वीरैः पुत्रैः सुवीरः स्यां पोषैः धनादिपुष्टिभिः सुपोषः शोभनपोषो भवेयम् ।।29।।

## त्रिंशी

**उपयामगृंहीतोऽसि मधंवे त्वोपयामगृंहीतोऽसि माधंवाय त्वोपयामगृंहीतोऽसि शुक्रायं त्वोपयामगृंहीतोऽसि शुचंये त्वोपयाम-गृंहीतोऽसि नभंसे त्वोपयामगृंहीतोसिनभस्यायत्वो पयामगृहीतो सीषे त्वोपंयामि गृहीतो ऽस्यूर्जे त्वौपयामगृंहीतोऽसि सहंसे त्वोपयामगृंहीतोऽसि सहस्याय त्वोपयामगृंहीतोऽसितपंसे त्वोपयामगृंही- तोऽसि तपस्याय त्वोपयामगृंहीतोऽस्यꣳहसस्पतयें त्वा ।।३०।।**

**अन्वय :** (हे ऋतुग्रह) त्वम् उपयामगृहीतः असि, मधवे त्वा, माधवाय त्वा, शुक्राय त्वा, शुचये त्वा, नभसे त्वा, नभस्याय त्वा, इषे त्वा, ऊर्ज्जे त्वा, सहसे त्वा, सहस्याय त्वा, तपसे त्वा, तपस्याय त्वा, अंहसस्पतये त्वा (गृह्णामि)।

**व्याख्या :** हे ऋतुग्रह, तुम उपयामद्वारा गृहीत हो, अतः मधु नामक चैत्रमास के लिए मैं तुम्हें ग्रहण करता हूँ। वैशाख मास के लिए, ज्येष्ठमास के लिए आषाढ़मास के लिए, श्रावणमास के लिए, मेघों से घिरे भाद्रमास के लिए, आश्विनमास के लिए, कार्तिकमास के लिए मार्गशीर्षमासे लिए बलवर्धक पौषमास के लिए माघमास के लिए तथा फाल्गुन मास की प्रसन्नता के लिए तुझे ग्रहण करता हूँ। मलमास सूर्य की गति से होने वाले अधिकमास के प्रीत्यर्थ तुझे ग्रहण करता हूँ।

इस मन्त्र में यथाक्रम बारह महीनों के वैदिक नाम है।

**म० :** ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोऽसि मधवेत्वेति द्वादश प्रतिमन्त्रमध्वर्योः पूर्वः पूर्वो मन्त्र उत्तर उत्तरः प्रतिप्रस्थातुरिति' (का. 9। 13। 1-4)। अध्वर्युप्रतिप्रस्थातारावृतुग्रहैद्वादशभिरनुतिष्ठतः उपयामेत्यादयो द्वादश मन्त्राः तत्र षट्सु मन्त्रयुग्मेषु पूर्वः पूर्वो मन्त्रेऽध्वर्योः उत्तर उत्तरः प्रतिप्रस्थातुरिति मन्त्रविवेकः। द्वादश लिंगोक्तानि। हे ऋतुग्रह, त्वमुपयामेन गृहीतोऽसि मधवे मधुनाम्ने चैत्रमासाय त्वां गृह्णामीति शेषः।

माधवाय वैशाखाय त्वां गृह्णामि। मधुमाधवौ वासन्तौ मधुप्रमुखमन्नं वसन्ते प्रपद्यते। शुक्राय ज्येष्ठाय त्वां गृह्णामि। शुचये आषाढमासाभिमानिदेवार्थं त्वां गृह्णामि। शुक्रशुची ग्रीष्ममासौ 'शुच शोषणे' इत्यस्य धातोः। नभसे श्रावणमासाय सोम, त्वां गृह्णामि। नभोनभस्यौ वार्षिकौ मासौमेघबाहुल्यान्न भात्यत्र सूर्य इति नभा नभस्यश्च इषे आश्विनमासाय त्वां गृह्णामि ऊर्जे कार्तिकमासाय त्वां गृह्णामि। इषमन्नम् ऊर्जं तदुपसेचनं दध्यादि तदत्र प्रचुरं भवति मतुपोलोपादभेदोपचाराद्वा ऊर्क्शब्देन शारदौ मासावुच्येते। सहसेमार्गशीर्षमासाय। सहस्याय पुष्यमासाय। सहःसहस्यौ हैमन्तिकौ मासौ। सहतेः प्रसहनार्थस्य प्रयोगः। प्रसहनमभिभवनम्। यतो हेमन्तः शीतेन नरानभिभवति। तपसे माघमासाय तपस्याय फाल्गुनाय। तपस्तपस्यौ शैशिरौ मासौ। तपति सूर्यो यत्रत्यन्तं स तपास्तपस्यश्च। 'त्र्योदशं गृह्णीयादिच्छन्नुपयामगृहीतोऽस्यंᳬह-सस्पतये त्वां (का. 9। 13। 18) इति इच्छन्नध्वर्युस्त्रयोदशमृतुग्रहं गृह्णीयात् ऐच्छिको विकल्पः। हे ग्रह, त्वमुपयामेन पात्रेण गृहीतोऽसि ताहशं त्वामंहसः पतयेऽधिकमासाधिष्ठात्रे गृह्णामीति शेषः। अंहः पापं तस्य पतिः। मलमासत्वादयं द्वादशस्वपि पतति यद्वांसहतेर्गतिकर्मणाऽसुन्प्रत्ययान्तस्य रूपमह इति। अंहनमंहो गतिस्तस्य पतिः त्रयोदशो मासः आदित्यगतिवशेन जायते ॥30॥

## एकत्रिंशी

**इन्द्राग्नीऽआगतᳬसुतं गीर्भिर्नभोवरेण्यम्। अस्य पातं धियेषिता॥**
**उपयामगृहीतोऽसीन्द्राग्निभ्यान्त्वैष ते योनिरिन्द्राग्निभ्यां त्वा ॥३१॥**

**अन्वय :** (हे) इन्द्राग्नी गीर्भिः नभो वरेण्यं सुतम आगतम्। इषिता धिया अस्य पातम्। उपयाम गृहीतोसि इन्द्राग्निभ्यां त्वा (सादयामि)।

**व्याख्या :** हे इन्द्राग्नी आप दोनों हमारी स्तुतियों से प्रेरित होकर आदित्य के समान वरणीयतेज प्रदाता या स्वर्गस्थ देवों से प्रार्थनीय सोम ग्रहण के लिए आइये। आप दोनों हमारी स्तुति से प्रसन्न होकर सोमपान के लिए आइये। आप दोनों यहाँ आकर स्वेच्छया रूचिपूर्वक सोम का पान करें। हे सोम तुम उपयामसंज्ञककलश से गृहीत हो। (हे ग्रह) इन्द्र एवं अग्नि की प्रीति (प्रसन्नता) के लिए तुझे ग्रहण करता हूँ। यह तुम्हारा स्थान है। मैं इन दोनों के निमित्त तुम्हें स्थापित करता हूँ।

**म॰** : 'ऐन्द्राग्नं गृह्णाति' (का. 9। 13। 20)। प्रतिग्रस्थातेन्द्राग्निदेवताकं ग्रहं गृह्णीयात्। ऐन्द्राग्री गायत्री विश्वामित्रदृष्टा। हे इन्द्राग्नी, युवां सुतमभिषुतं सोमं प्रति आगतमागच्छतम्। गच्छतेर्व्यत्ययेन शपो लुक् 'अनुदात्त-' (पा. 6। 4। 37) इति मलोपश्च। किंभूतं सोमम्। गीर्भिर्नभोवरेण्यंगीर्भिः त्रयीलक्षणाभिर्वाग्भिः नभ इवादित्य इव वरेण्यौ वरणीयः प्रार्थनीयस्तम्। 'नभ आदित्यो भवति नेता भासां ज्योतिषां प्रभवोऽपि' (नि. 2। 22) इति यास्कोक्तेर्नभ आदित्यः लुप्तोपमानम्। यद्वा गीर्भिः स्तुतिरूपाभिर्वाग्भिः युतमिति शेषः। नभो नभःस्थितैः स्वर्गरथैर्देवैर्वरेण्यं प्रार्थनीयम्। नभःशब्देन लक्षणया नभःस्था देवा उच्यन्ते। किंच हे इन्द्राग्नी, युवामस्य सोमस्य संबन्धिनं स्वमंशं पातं पिबतम्। पिबादेशाभावश्छान्दसः। किंभूतौ युवाम्। धियेषिता धिया यजमानयुज्या इषितौ प्रेषितौ प्रार्थितौ। एवं देवानुक्त्वा सोममाह हे सोम, उपयामेन ग्रहेण गृहीतोऽसि हे ग्रह, इन्द्राग्निभ्यामर्थे त्वां गृह्णामीति शेषः। एष त इति सादनम्। एष तव योनिः स्थानम्। इन्द्राग्निभ्यामर्थे त्वां सादयामि ।।31।।

### द्वात्रिंशी

**आ घा येऽअग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा। उपयामगृहीतोऽस्यग्नीन्द्राभ्यां त्वैष ते योनिरग्नीन्द्राभ्यां त्वा ।।३२।।**

**अन्वय** : ये यजमानाः अग्निं आ इन्धते (आदीपयन्ति) यजन्ति आनुषक् क्रमेण बर्हिः स्तृणन्ति, येषां युवा इन्द्रः सखा। हे सोम उपयाम गृहीतः असि, इन्द्राग्निभ्यां त्वां गृह्णामि। एष ते योनिः अग्नीन्द्राभ्यां त्वा(सादयामि)।

**व्याख्या** : जो भक्तजन (यजमान) विविध यागों में अग्नि को प्रदीप्त करते हैं अर्थात–नित्यअग्निहोत्र आदियाग करते हैं, और यथाक्रम (विधिपूर्वक) देवताओं के लिए आसनार्थ कुशाओं को बिछाते हैं। हे सोम, उनके यज्ञ में उपयाम ग्रह द्वारा तुम स्वीकृत हो। अग्नि और इन्द्र देवों के लिए मैं तुम्हें ग्रहण करता हूँ। हे सोम यह तुम्हारा स्थान है, इन दोनों के लिए मैं तुम्हें स्थापित करता हूँ।

**म॰** : अग्नीन्द्रदेवत्या गायत्री त्रिशोकदृष्टा। अस्या विनियोगः कात्यायनेनोक्तः। ऐन्द्राग्नग्रहे एव विकल्पः शाखान्तरे। ये यजमाना अग्निमा

इन्धते आदीपयन्ति इष्टिपशुसोमचातुर्मास्यैर्यजन्तीत्यर्थः। घेत्यनर्थको निपातः। तस्य संहितायाम् 'ऋचि तुनुघ-' (प. 6। 3। 133) इत्यादिना दीर्घः। ये चानुषक् आनुपूर्व्येण क्रमेण बर्हिःस्तृणन्ति आच्छादयन्ति अनुषज्यते अनु क्रमेणासज्यते स्तीर्यत इत्यनुषक्। कर्मणि क्विप्। अकारस्य संहितायां दीर्घः। 'आनुषगिति नामानुपूर्वस्यानुषक्तं भवति' (नि. 6। 14) इति यास्कोक्तेरानुषक्शब्देनानुपूर्वमुच्यते। किंच येषां यज्वनां युवा जरामृत्युरहित इन्द्रः सखा मित्रवदुपकारकः। हे सोम, तेषां यज्ञे उपयामेन ग्रहेण त्वं स्वीकृतोऽसि अग्नीन्द्रदेवार्थ त्वां गृह्णामि। सादयति हे सोम, एष ते योनिः अग्नीन्द्राभ्यामर्थे त्वां सादयामि ।।32।।

## त्रयस्त्रिंशी

**ओमा॑सश्चर्षणीधृतो विश्वे॑देवास आग॑त। दाश्वाꣳसो॑ दाशुषः॑ सुतम्। उपयामगृ॑हीतोऽसि विश्वे॑भ्यस्त्वा देवेभ्य॑ एष ते योनिर्विश्वे॑भ्यस्त्वा देवेभ्यः॑।।३३।।**

**अन्वय :** हे विश्वेदेवासः ओमासः चर्षणीधृतः यूयम् आगत आगच्छत। सुतं दाशुषः दाश्वांसः कामान्पूरयन्त। हे सोम उपयाम गृहीतोअसि। विश्वेभ्यः देवेभ्य त्वा (गृहणामि)। (हे सोम) एष ते योनिः। विश्वेभ्यः देवेभ्यः त्वा (सादयामि)।

**व्याख्या :** हे विश्वेदेवो! आप हमलोगों के रक्षक एवं मनुष्यों को करने वाले हैं। अनिष्ट को दूर करना ही रक्षण है, तथा इष्ट की प्राप्ति कराना पोषण है। आप हमारे यहाँ आइए। अभिषुत सोमरस प्रदान करने वाले यजमान की कामनाओं को पूर्ण करे। हे सोम, तुम उपयाम ग्रहपात्र द्वारा स्वीकृत हो। सभी देवों के निमित्त तुम्हें ग्रहण करता हूँ। हे सोम! यह तुम्हारा स्थान हैं। सभी देवताओं के लिए तुम्हें स्थापित करता हूँ।

**म० :** 'वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणकलशादन्वारब्धेवौमास इति' (का. 9। 14। 1)। अध्वर्यौ यज्वना स्पृष्टेऽस्पृष्टे वा सति द्रोणकलशाच्छुक्रपात्रेण वैश्वदेवं ग्रहं गृह्णीयात्। वैश्वदेवी गायत्री मधुच्छन्दोदृष्टा। हे विश्वेदेवासः विश्वेदेवाः, यूयमागत आगच्छत। किंभूता यूयम्। ओमासः ओमाः 'अवन्तीत्योमा रक्षितारः अवितारो वावनीया वा' (नि. 12। 40) इति यास्कोक्तेः। तर्पयितारस्तर्पणीया वा। अवतेर्मक्प्रत्ययः संप्रसारणं च।

तथा चर्षणीधृतः चर्षणयो मनुष्यास्तान्धरन्ति पुष्णन्ति तैर्वा ध्रियन्ते ते चर्षणीधृतः चर्षणिशब्दस्य संहितायां दीर्घः। अनिष्टनिरसनं रक्षणम् इष्टप्रापणं पोषणमित्यवनधरणयोर्भेदः। तथा सुतमभिषुतं सोमं दाशुषः दत्तवतो यजमानस्य दाश्वांसः फलं दत्तवन्तः। कामान्पूरयन्त इत्यर्थः। यद्वा सुतं सोमं पातुमिति शेषः। 'दाश्वान्–' (पा. 6। 1। 12) इत्यादिना निपातः। हे सोम, त्वमुपयामेन स्वीकृतोऽसि। विश्वेभ्यो देवेभ्योऽर्थाय त्वां गृह्णामीति शेषः। सादयति एष ते योनिः विश्वेभ्यो देवेभ्योऽर्थाय त्वां सादयामि ।।33।।

## चतुस्त्रिंशी

**विश्वेदेवास आगत शृणुता म इमꣳ हवम्। एदं बर्हिर्निषीदत। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ।।३४।।**

**अन्वय :** हे विश्वेदेवासः विश्वेदेवाः यूयम् आगत आगच्छत। मे इमं हवं श्रृणुत। इदं बर्हिः आ निषीदत। (हे सोम) त्वम् उपयाम पात्रेण गृहीतोसि। विश्वेभ्यो देवेभ्यः त्वा (गृह्णामि)। हे सोम) एष ते योनिः विश्वेभ्यो देवेभ्यः त्वा (सादयामि)।

**व्याख्या :** हे विश्वेदेवों! आप लोग हमारे यज्ञ में आये तथामेरी प्रार्थना (आह्वान) को सुनें। इस कुशा के आसन पर आप विराजमान हों। हे सोम तुम उपयाम पात्र द्वारा स्वीकृत हो। सभी देवों के लिए मैं तुम्हें ग्रहण करता हूँ। यह तुम्हारा स्थान है, सभी देवों के लिए मैं तुम्हें स्थापित करता हूँ।

इस मन्त्र के द्वारा वैश्वदेवग्रहग्रहण की विधि सम्पन्न होती है। यहाँ प्रातः सवन के सभी ग्रह पूर्ण होते हैं।

**म० :** वैश्वदेवी गायत्री गृत्समददृष्टा वैश्वदेवग्रहग्रहण एव विकल्पेनाम्नाता। हे विश्वेदेवासः, यूयमागत अस्मद्यज्ञं प्रत्यागच्छत। आगत्य च मे ममेमं हवमाह्वानं श्रृणुत। श्रुत्वा इदंमदीयं बहिंः आनिषीदत बर्हिष उपर्युपविशत। उपयामेति पूर्ववत् ।।34।।

## पञ्चत्रिंशी

**इन्द्र मरुत्वऽइह पाहि सोमं यथा शार्याते अपिबः सुतस्य। तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः ।। उपयाम–**

**गृहीतोसीन्द्राय त्वा मरुत्वंत एष ते योनिरिन्द्राय त्वा मरुत्वंते ।।३५।।**

**अन्वय :** मरुत्वः (मरुद्भिः सह) हे इन्द्र! इह सोमं पाहि (पिब) यथा शार्याते: सुतस्य सोमांशं अपिबः (पीतवान्) असि। हे शूर! तव प्रणीती सुयज्ञाः कवयः तव शर्मन् आविवासन्ति। (हे सोम) त्वं उपयाम गृहीतः असि, विश्वेभ्यः देवेभ्यः त्वा (गृह्णामि)। (हे सोम) एष ते योनिः विश्वेभ्य देवेभ्यः त्वा (सादयामि)।

यहाँ से माध्यन्दिनसवन ग्रहग्रहण की विधि प्रारम्भ होती है। भगवान सूर्य जब अन्तरिक्ष के मध्य में पहुँचते है तब माध्याग्नि सबन के कृत्य प्रारम्भ होते हैं।

**व्याख्या :** मरुतों के सहित हे इन्द्रदेव, आप हमारे इस यज्ञ में सोमपान करें, जैसे आपने मनुपुत्र शर्याति के यज्ञ में अभिषुत सोमरस का पान किया था। हे शूरवीर आपकी अनुज्ञा (प्रेरणा) से ही आपके प्रेमीजन श्रौतयज्ञों का सम्पादन करनेवाले क्रान्तदर्शीजन, आपकी शरण में आते हैं। हे सोम तुम उपयाम द्वारा गृहीत हो। मरुतों से युक्त इन्द्रदेव के लिए तुम्हें स्थापित करता हूँ।

**म० :** एते प्रातःसवनग्रहाः पूर्णाः। अथ माध्यन्दिसनवनग्रहा उच्यन्ते। 'माध्यन्दिने सवने मरुत्वतीया गृह्यन्ते' इति तित्तिरिवचनात्। तेषु त्रयो मरुत्वतीयास्तत्र प्रथममाह। 'मरुत्वतीयमृतुपात्रेणेन्द्र मरुत्व इति' (का. 10। 1। 14) ऋतुपात्रेण मरुत्वतीयं ग्रहं गृह्णीयात्। ऐन्द्रमारुतीश्चतस्त्रस्त्रिष्टुभो विश्वामित्रदृष्टाः। मरुतो देवा विद्यन्ते यस्य स मरुत्वान् तस्य संबोधनं हे मरुत्वः, 'मतुवसो रु संवुद्धौ छन्दसि' (पा. 8। 3। 1) इति रुत्वम्। मरुद्भिः सहित हे इन्द्र, इहास्मदीये यज्ञे सोमं पाहि पिब। कथं पातव्यस्तत्राह। यथा शार्याते शर्यातिर्नाम कश्चिद्राजा तस्य संबन्धिनि यज्ञे। सुतस्याभिषुतस्य सोमस्यांशमपिबः पीतवानसि। तद्वदिह पिब। 'शार्यातो ह वा इदं मानवो ग्रामेण चचार' (4। 5। 2) इति श्रुतिः। किंच हे शूर वीर, तव प्रणीती प्रणीत्या प्रणयनेनानुज्ञया सुयज्ञाः कल्याणयज्ञाः कवयः क्रान्तदर्शनास्तव शर्मन्सुखनिमित्ते शर्मणि यज्ञगृहे वा आविवासन्ति त्वां परिचरन्ति। विवासतिः परिचर्यार्थः। उपयामेन सोम, त्वं गृहीतोऽसि मरुत्वत इन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः मरुत्वते इन्द्राय त्वां सादयामि ।।35।।

**म॰ :** अथ पञ्चमो मन्त्रः आग्नेयी त्रिष्टुप्। इदानीं देवान् विसृजति। हे अग्ने, हे देव दीप्यमान, उशतो हवींषि कायममानान् यान्देवान् त्वमावहः आहूतवानसि तान् देवान् स्वे स्वकीये सधस्थे सहनिवासस्थाने प्रेरय प्रस्थापय सह तिष्ठन्ति यस्मिन् तत्सधस्थम् 'सधमादस्थतयोश्छन्दसि' (पा. 6। 3। 96) इति स्थे परे सहस्य सधादेशः। किमुक्त्वा प्रेरयामीति चेत् अत आह। हे देवाः, विश्वे सर्वे यूयं जक्षिवांसः 'घस्लृअदने' 'क्वसुश्च' (पा. 3। 2। 107) इति क्वसुः। 'वस्त्रेकाजाद्धसाम्' (पा. 7। 2। 67) इतीट्। सवनीय पशुपुरोडाशान् भक्षितवन्तः। तथा पपिवांसः सोमपानं कृतवन्तश्चेदानीं यज्ञसमाप्तौ असुं हिरण्यगर्भप्राणलक्षणं वायु वायुमण्डलमित्यर्थः। घर्ममादित्यमण्डलं वा स्वः द्युलोकं वा अन्वातिष्ठत आश्रयत। यस्य यस्य यत्र गृहाः सन्ति तांस्तानन्वतिष्ठतेत्यर्थः। 'छन्दसि परेऽपि' (पा. 1। 4। 81) इति अनोः क्रियापदात्परत्वम् खाहा सुहुतमस्तु हविः ॥19॥

## विंशी

**व॒यꣳहि त्वा॑ प्र॒यति य॒ज्ञे अ॒स्मिन्नग्ने॒ होता॑रमवृणीमही॒ह। ऋध॑गया॒ऽऋध॑गु॒ताश॑मिष्ठाः प्रजा॒नन्य॒ज्ञमुप॑याहि वि॒द्वान्स्वाहा॑ ॥२०॥**

**अन्वय :** (हे) अग्ने! हि वयम् अस्मिन् प्रयति यज्ञे त्वा (त्वाम्) होतारम् अवृणीमहि (वृतवन्तः) (तस्मात् कारणात् त्वं) ऋधग् अयाः (इष्टवानसि)। विद्वान् यज्ञं प्रजानन् उपयाहि स्वाहा।

**व्याख्या :** हे अग्निदेव! हम लोग इस प्रवर्तमान यज्ञ में आपको होता के रूप में (देवताओं को बुलानेवाले) वरण किया है। अतः आपने इसे निर्विघ्न पूर्ण किया। आप सर्वज्ञ है। अतः इस यज्ञ को समाप्त समझकर अपने स्थान को जायें। यह आहुति आपके लिए है।

**म॰ :** अथ षष्ठः। आग्नेयी त्रिष्टुप् इदानीमग्निं विसृजति। हे अग्ने, हि यस्मात्कारणादिहास्मिन् दिने स्थाने वा अस्मिन्। यज्ञे प्रयति प्रवर्तमाने सति होतारं देवानामाह्वातारं होमनिष्पादकं वा त्वा त्वां वयमवृणीमहि वृतवन्तः। 'अग्निवै दैव्यो होते' ति श्रुतेः तस्मात्कारणाद्धतस्त्वमृधक् समृद्धं यथा भवति तथा अयाः। यद्वा ऋधोतीति ऋधक् ऋधुवन् यज्ञं समर्धयन्सन् अयाः अयाक्षीः इष्टवानसि। यज्ञं कारितवानसीत्यर्थः। यजतेश्च्लिलोपे

यकारस्य छान्दसं रुत्वम्। उतापि च ऋधक् ऋधुवच्चेव अशमिष्ठाः यज्ञप्रायश्चितं शमितवानसि विघ्नशान्तिं वा अकाषीः स त्वमिदानीं यज्ञं प्रजानन् यज्ञं समाप्तमवगच्छन् उपयाहि स्वगृहं गच्छ। किंभूतस्त्वम् विद्वान्पण्डितः स्वाधिकारं जानन्नित्यर्थः। स्वाहा तुभ्यं सुहुतमस्तु ।।20।।

## एकविंशी

**देवा गातुविदो गातुं वित्त्वा गातुमित। मनसस्पत इमं देव यज्ञꣳस्वाहा वाते धाः ।।२१।।**

**अन्वय :** हे गातुविदो देवाः गातुं वित्वा यज्ञं समाप्तं ज्ञात्वा गातुमित। (स्वकीयं मार्गं गच्छत) (हे) मनसस्पते! इमं यज्ञं स्वाहा वाते धाः। (स्थापय)

**व्याख्या :** हे विविधयज्ञों के वेत्ता देवो! (जानने वाले) मेरे इस यज्ञ को पूर्ण समझकर सन्तुष्ट होते हुए अपने स्थान को प्राप्त करे। हे मन के अधिपति-प्रजापति देव इसे हम आपको समर्पित करते हैं तथा आप इसको (यज्ञ को) वायु में स्थापित करें।

**म० :** अथ सप्तमः। वातदेवत्या विराट् मनसस्पतिदृष्टा व्याख्यातापि (अध्या. 2 क. 21) उच्यते। 'कै गै शब्दे' गीयते नानाविधैर्वैदिकशब्दैः प्रतिपाद्यत इति गातुर्यज्ञस्तं विदन्ति जानन्तीति गातुविदः तादृशा हे देवाः, गातुं वित्त्वा अस्मदीयो यज्ञः प्रवृत्त इति विदित्वा गातुमित यज्ञं गच्छत। यद्वा गातुं वित्त्वा यज्ञं समाप्तं विदित्वा गातुमित। 'गाङ् गतौ' गायते गम्यते यत्र स गातुर्मार्गस्तं गच्छत यज्ञं समाप्तं मत्वा यज्ञेन तुष्टाः सन्तः स्वकीयं मार्ग गच्छत। एवं देवानुक्त्वा प्रजापतिमाह। हे मनसस्पते, अस्मदीयस्य मनसो यष्टुं प्रेरणेन पालक परमेश्वर हे देव, इममनुष्ठितं यज्ञं स्वाहा त्वद्धस्ते दधामि त्वं च वाते धाः वायुरूपे देवे यज्ञं धेहि स्थापय ।।21।।

## द्वाविंशी

**यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा। एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा ।।२२।।**

**अन्वय :** (हे) यज्ञ! यज्ञं गच्छ, यज्ञपतिं गच्छ स्वांयोनिं गच्छ स्वाहा। (हे) यज्ञपते! विष्णो एष यज्ञः ते सहसूक्तवाकः सर्ववीरः, तं जुषस्व स्वाहा।

**व्याख्या :** हे यज्ञ! तुम यज्ञपुरुष (विष्णु) को प्राप्त करो, फल प्रदान के लिए यजमान को प्राप्त करो तथा अपने कारणभूत द्रव्यों को प्राप्त करो। यह आहुति आपको समर्पित हो। हे यजमान! तुम्हारे द्वारा यह अनुष्ठित यज्ञ विविधसुक्तों से सुशोभित तथा सोम, सवनीय पुरोडाशादि से युक्त हैं ऐसे याग का फलभोगपूर्वक सेवन करों। यह आहुति आपको सुहुत हो।

**म॰ :** अथाष्टमः। यज्ञदैवतं यजुः। यज्ञं विसृजति। हे यज्ञ, त्वं यज्ञं गच्छ स्वप्रतिष्ठार्थ यज्ञनामकं विष्णुं गच्छ। यज्ञपतिं यजमानं गच्छ। फलप्रदानेन यजमानं प्राप्नुहीत्यर्थः। स्वां योनिं गच्छ। स्वनिष्पत्त्यर्थ स्वां योनिं स्वकारणभूतां वायोः क्रियाशक्तिं गच्छ। द्रव्यं देवता च यज्ञस्य योनिः सर्वात्मात्वमिति भावः। स्वाहा सुहुतमस्तु। अथ नवमः समिष्टुयजुर्मन्त्रः। यज्ञपतिदैवतम्। हे यज्ञपते यजमान, एषोऽनुष्ठीयमानो यज्ञस्ते तव त्वदीयोऽस्ति। कीदृशः सहसूक्तवाकः सूक्तवाकैः स्तोत्रैः सहितः। तथा सर्ववीरः सर्वे वीरा यस्मिन् स तथा सोमः पशुः। सवनीयचरुपुरोडाशा वीरा उच्यन्ते तैः सहितः य ईदृशस्तं यज्ञं जुषस्व फलभोगेन सेवय। स्वाहा सुहुतमस्तु ॥22॥

### त्रयोविंशी

**माहि॑र्भू॒र्मा पृदा॑कुः। उ॒रुꣳहि राजा॒ वरु॑णश्च॒कार॒ सूर्या॑य॒ पन्था॒मन्वे॑त॒वाउ॑। अ॒पदे॒ पादा॒ प्रति॑धातवेऽकरु॒ताप॑व॒क्ता हृ॑दया॒विध॑श्चित्। नमो॒ व्वरु॑णाया॒धिष्ठि॑तो॒ व्वरु॑णस्य॒ पाश॑ः ॥२३॥**

**अन्वय :** हे रज्जो त्वं मा अहिः भूः, मा पृदाकुः। राजा वरुणः सूर्याय अनु एतवा उ उरुं पन्थां चकार। अपदे पादा प्रतिधातवे अकः। हृदयाविधः चिद् अपवक्ता। नमोवरुणाय वरुणस्य पाशः अधिष्ठितः

**व्याख्या :** हे रज्जु! सर्प न बनो, अजगर भी न बनो। राजा-वरुण सूर्य के अनुदिनगमन के लिए विस्तीर्णमार्ग का निर्माण किया है। उसने जहाँ अपुण्यशील जन पाँव भी (पैर) नहीं रख सकते ऐसे स्वर्गादिलोक में (पैर रखने को लिए) रहने के लिए स्थान बनाया। अर्थात् वह हमारे लिए भी अन्तरिक्ष में पैर रखने के लिए (स्वर्गगमन के लिए) मार्ग तैयार करें। वह हृदय की पीड़ादेने वाले का तिरस्कार करते है, ऐसे वरुणदेव को नमस्कार है। ये वरुणदेव के पाश चारों ओर स्थिर होकर मेरी रक्षा करें।

इस मन्त्र के द्वारा अध्वर्यु चात्वाल में कृष्ण विषाण तथा मेखला फेकता है।

**म॰ :** 'कृष्णविषाणमेखले चात्वाले प्रास्यति माहिर्भूरिति' (का. 10। 8। 13)। यजमानहस्तस्थं मृग शृङ्गमध्ये बद्धा मेखला चेत्युभे विस्रंस्य चात्वाले क्षिपेत्। रज्जुदेवत्यम्। हे रज्जो, त्वमहिः सर्पो मा भूः। पृदाकुः अजगरः सर्पविशेषः सोऽपि मा भूः। 'उरुहीति वाचयतीति' (का. 10। 8। 15)। अवभृथाय जिगमिषुरध्वर्युश्चात्वालसमीपस्थं प्राङमुखं यजमानं वाचयेत्। वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा। उशब्दोऽवधारणे। वरुण एव राजा सूर्याय अन्वेतवै। षष्ठ्यर्थे चतुर्थी। सूर्यस्यान्वेतुमनुक्रमेणान्वहं गन्तुं हि यस्मात् उरुं विस्तीर्णं पन्थां पन्थानं मार्गं चकार। क्व अपदे नास्ति पदं यस्मिन् यत्र दत्तं पदं प्रतिमुद्रितं न भवति तस्मिन्नन्तरिक्षे मार्गं कृतवानित्यर्थः। तस्मादस्माकमपि अपदे अन्तरिक्षे पादा प्रतिधातवे पादौ निक्षेप्तुं। विभक्तेराकारः। मार्गं कः करोतु। स्वर्गगमनाय मार्ग करोत्वित्यर्थः। करोतेरदादित्वेन लङ्शिपो लुक् अडभाव आर्षः। किंच यो वरुणः उतापिच हृदयाविधश्चिदपवक्ता हृदयं विध्यति मर्मोच्चारणेन पीडयति हृदयवित् 'नहिवृतिवृषि-' (पा. 6। 3। 116) इत्यादिना किवन्ते व्यधौ परे हृदयस्य दीर्घः। तस्य हृदयाविधः। तस्य हृदयाविधः पिशुनस्यापि अपवदिता चिच्छब्दोऽप्यर्थे। निन्दकस्यापि तिरस्कर्ता किमुतान्येषां पापकारिणामित्यर्थः। ईदृशो वरुणोऽवभृथाय मार्ग ददात्वित्यर्थः। अन्वेतवै प्रतिधातवे। अनुपूर्वादिणः प्रतिपूर्वाद्दधातेश्च 'तुमर्थे सेसे-' (पा. 3।4।9) इत्यादिना क्रमात्तवैतवेप्रत्ययौ 'नमो वरुणायेति वाचयत्वपोऽवक्रमयन्निति' (का. 10। 8। 21)। अवभृथ-स्त्रानार्थमपः प्रवेशयन्यजमानं वाचयेत्। वारुणं यजुः। वरुणस्य पाशोऽधिष्ठितः आक्रान्तस्तस्मात्र बन्धनक्षमस्तस्मै वरुणाय नमो नमस्कारोऽस्त्विति शेषः ॥23॥

## चतुर्विंशी

**अ॒ग्नेरनी॑कम॒प आवि॑वेशा॒पांन्नपा॑त्प्रति॒रक्ष॑न्नसु॒र्य॑म्। दमे॑दमे स॒मिधं॑ यक्ष्यग्ने॒ प्रतिं॑ ते जि॒ह्वा घृ॒तमुच्च॑रण्य॒त्स्वाहा॑ ॥२४॥**

**अन्वय :** हे अग्ने! अपानपात् अनीकम् अपः आविवेश। असूर्यं प्रतिरक्षन् दमे दमे समिधं यक्षि। हे अग्ने! ते जिह्वा घृतं प्रति उच्चरण्यत्

स्वाहा।

**व्याख्या :** हे अग्निदेव! अपने अपांनपात्नामक मुख को इस जल में प्रविष्ट करो। असुरों द्वारा किये गये यज्ञविघ्नों से यज्ञ की रक्षा करते हुए प्रत्येक घर में (प्रत्येक यज्ञशाला में) प्रदीप्त होकर यजन को स्वीकार करो। तुम्हारी जिहवा=ज्वाला इस आज्य के प्रति गतिशील हो। यह आहुति सुहुत हो।

**म० :** 'प्रास्य समिधं चतुर्गृहीतेनाभिजुहोति अग्नेरनीकमिति' (का. 10। 8। 22) अप्सु समिधं प्रक्षिप्य चतुर्गृहीतेनाज्येन तदुपरि जुहुयात्। अग्रिदेवत्या त्रिष्टुप्। अग्नेरनीकमिति परोक्षलिंगं, समिधं यक्ष्यग्न इति प्रत्यक्षलिंगमेकस्मिन्वाक्ये त्वसंगतमतो यच्छब्दाध्याहारेण योज्यम्। हे अग्ने, यस्य तवाग्ने अंगनशीलस्य सतोऽपान्नपात्संज्ञकमनीकं मुखमप उदकान्यादिवेश आभिमुख्येन प्रविवेश। हे अग्ने, स त्वं दमेदमे तत्तद्यज्ञगृहे असुर्यमसुरैः कृतं यज्ञविध्नं प्रतिरक्षन्निवर्तयन्सन् समिधं समिन्धनसाधनं घृतं यक्षि यज संगतं कुरु। यजतिः संगतिकरणार्थः शपो लुकि लटि रूपम्। घृतमात्मसंगतं कुर्वित्यर्थः। ततोऽनन्तरं ते तव जिह्वा ज्वाला घृतं प्रति उच्चरण्यत् उच्चरतु उद्युक्तास्तु। स्वाहा सुहुतमस्तु। दमेदमे इति वीप्साश्वमेधविषया। तत्र हि नानावभृथान्यहानि भवन्ति। उत्पूर्वाच्चरतेर्लोडर्थे न्यत्प्रत्यय औणादिकः ।।24।।

## पञ्चविंशी

**स॒मु॒द्रे ते॒ हृद॑यम॒प्स्व॒न्तः सन्त्वा॑ विश॒न्त्वोष॑धीरु॒तापः॑। य॒ज्ञस्य॑ त्वा यज्ञपते सू॒क्तोक्तौ॑ नमोवा॒के वि॑धेम॒ यत्स्वाहा॑ ।।२५।।**

**अन्वय :** (हे सोम) समुद्रे यत् ते हृदयं, अप्सु अन्तः (वर्तते) ओषधीः उत आपः त्वा संविशन्तु। हे यज्ञपते! यज्ञस्य सूक्तोतौं नमोवाके त्वा विधेम स्वाहा।

**व्याख्या :** हे सोम! तुम्हारा जो हृदय समुद्र (बहुलोदक) में स्थित है उसे मैं वही पहुँचाता हूँ। उसमें स्थित ओषधियाँ तथा जल तुम्हारे में प्रविष्ट हो। हे यज्ञपति! (यज्ञ के रक्षक सोम! यज्ञ के समय सूक्तोंच्चारण एवं देवों के प्रति नमस्कार वचनों के लिए तुम्हें स्थापित करते हैं। अर्थात् हम तुम्हारे अनुग्रह से सुन्दरवचन एवं नमोयुक्त स्तुतियों

का प्रयोग करें। यह हवि तुम्हें सुहुत हो।

इस मन्त्र से ऋजीषकुम्भ का प्लावन, उपस्थान तथा मज्जन का विधान किया गया है।

**म० :** 'समुद्रे त इति ऋजीषकुम्भं प्लावयतीति' (का. 10। 9। 1)। गतसारः सोम ऋजीषस्तेन पूर्णकुम्भमप्सु क्षिपेत्। सोमदेवत्या विराट् दशाक्षरचतुश्चतुः पादा। अन्ते वर्तमानो यच्छब्दो हृदयेन संबध्यते। हे सोम, यत्ते तव हृदयं समुद्रे अप्सु समुद्रसमानासु अप्सु बहुलोदकेषु अन्तर्मध्ये तिष्ठते वर्तत इति वा शेषः। तत्र त्वां गमयामीति शेषः। तत्रस्थं त्वा त्वामोषधीरोषधयः संविशन्तु। उत अपि च आपो जलानि त्वां संविशन्तु। किंच हे यज्ञपते, यज्ञस्य पालक सोम, यज्ञस्य सूक्तोक्तौ शोभनवचनोच्चारणे नमोवाके नमसो वाके नमस्कारवचने च त्वा त्वां विधेम स्थापयामः। विधतिः स्थापनार्थः। स्वाहा सुहुतमस्तु ।।25।।

## षड्विंशी

**देवी॑राप ए॒ष वो॒ गर्भ॒स्तꣳ सुप्री॑त॒ꣳसुभृ॑तं बिभृत। देव॑ सोमै॒ष ते॑ लो॒कस्तस्मि॒ञ्छं च॒ वक्ष्व॒ परि॑ च वक्ष्व ।।२६।।**

**अन्वय :** हे देवी:! (देव्यः) आपः एष (सोमः) वः गर्भः तं सुप्रीतं सुभृतं बिभृत। हे सोम! एष ते लोकः तस्मिन् शं वक्ष्व परि च वक्ष्व।

**व्याख्या :** हे दिव्यगुणसम्पन्न आपो (जल) देवता, यह सोम तुम्हारा गर्भरुप है। इसे प्रसन्नता पूर्वक एवं पुष्टि पूर्वक धारण करो। हे सोम! यह तुम्हारा निवास स्थान है इसमें रहकर सुख प्राप्त करो तथा हमारे सभी कष्टों को दूर करो।

**म० :** 'देवीराप इति विसृज्योपतिष्ठत इति' (का. 10। 9। 2)। ऋजीषकुम्भं मुक्त्वोपस्थानं कुर्यात्। अष्टत्रिंशदक्षरत्वात्पंक्तिर्बृहती वा। पूर्वार्धमब्देवतमुत्तरार्धं सोमदेवतम्। हे देवीर्देव्यः हे आपः, वो युष्माकमेष सोमो गर्भस्थानीयः तं तादृशं सोमं यूयं बिभृत धारयत। किंभूतं तम्। सुप्रीतं शोभनप्रीतियुक्तं साधुतर्पितं वा तथा सुभृतं सुपुष्टम्। इदानीं सोमं वदति। हे सोम, हे देव दीप्यमान, ते तव एष जललक्षणो लोकः स्थानं तस्मिन्नवस्थितः सन् त्वं शं वक्ष्व वह शं सुखमस्मान्प्रति प्रापय परिवक्ष्व च परिवह

निवर्तय अस्मत्तः सर्वा आर्तीरिति शेषः। 'तस्मिन्नः शं चैधि सर्वाभ्यश्च न आर्तिभ्यो गोपाय' (4। 4। 5। 21) वहतेर्लोट् मध्यमैकवचने तङि शपि लुप्ते रूपं वक्ष्वेति ।।26।।

**सप्तविंशी**

**अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि। देवानांᳬ समिदसि ।।२७।।**

**अन्वय :** हे निचुम्पुण, अवभृथ! त्वं निचेरुः असि। निचुम्पुणः, देवैः देवकृतम् एनः अवयासिषम्। मर्त्यैः मर्त्यकृतम् अव। हे देव, पुरुराव्णः रिषः पाहि। देवानां समित् असि।

**व्याख्या:** हे मन्दगामीअवभृथ (यज्ञान्तस्नान) जल। यद्यपि तुम तेजगति वाले (तीव्र प्रवाह) हो। परन्तु इस समय धीरे धीरे आगे चलो। मेरे द्वारा इन्द्रियों द्वारा तथा देवताओं के प्रति किये गये जो पाप हैं उन्हें इस जल में त्यागता हूँ। हमारे सहायकऋत्विजों तथा यज्ञदर्शनार्थ आये हुए लोगों के प्रति अवज्ञा, एवं कठोरभाषणादि रुप जो अपराध हमसे हुए हैं उन्हें भी इस जल में विसर्जित करता हूँ। हे अवभृथ! विरुद्ध फलदायी वधादि दोष भी आपकी कृपा से हमें न प्राप्त हों। हे अग्नि! तुम देवों के लिए इन्धन रुप हो। अवभृथ का अर्थ है—सोम को जल के पास ले जाना। इससे यज्ञों में जो प्रमादवश कार्यो में त्रुटि होते हैं, उनको दूर किया जाता है।

**म० :** 'अवभृथेति मज्जयतीति' (का. 10। 9। 3)। ऋजीषकुम्भं जले प्रवेशयेत्। यज्ञदैवतम्। अवाचीनानि पात्रणि जलमध्ये भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽवभृथः तत्संबोधनं हे अवभृथ, त्वं निचुम्पुण नितरां मन्दं गच्छ। 'चुपिमन्दायां गतौ' इति धातोः। यद्यपि त्वं निचेरुरसि नितरां चरणशीलोऽसि तथाप्यत्र निचुम्पुण नितरां मन्दं गच्छ। किं प्रयोजनमिति चेत् उच्यते। देवैर्द्योतनात्मकैरस्मदीयैरिन्द्रियैर्देवकृतं देवेषु हविः स्वामिषु कृतमेनः पापं यदस्ति तदवयासिषं जले अवनीतवानस्मि। 'देवः सुरे धने राज्ञि देवमाख्यातमिन्द्रिय' मित्यभिधानात्। तथा मर्त्यैर्मनुष्यैरस्मत्सहायभूतैर्ऋत्विग्भिर्मर्त्यकृतं मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतमवज्ञारूपं यदेनोऽस्ति तदप्यहम-

वायासिषमित्यनुवर्तते। इदमस्माभिः परित्यक्तमेनो यथा त्वां न प्राप्नोति तथा हे यज्ञ, मन्दं गच्छेति भावः किंच हे देवावभृथारूप यज्ञ, रिषः वधात्पाहि अस्मान्पालय। 'रिष् वधे' क्विप्। किंभूताद्रिषः। पुरुराव्ण, पुरु बहु विरुद्धं फलं राति ददातीति पुरुरावा। 'रा दाने' 'आतो मनिन्–' (पा. 3। 2। 74) इत्यादिना वनिप्। विरुद्धफलदायी वधः त्वत्प्रसादादस्माकं मा भूदित्यर्थः। 'आहवनीये समिदाधानं देवानांसमिदसीति' (का. 5। 5। 35) स्नानानन्तरमाह-वनीयमेत्य तस्मिन्समिधं दध्यात्। अग्निदेवतं यजुः। देवानां संबन्धिनी समित् इन्धनमसि। यद्वा। देवभूतानामस्माकं समिन्धनं भवसि ।।27।।

इतः परमनुबन्ध्यायां गर्भिण्यां प्रायश्चित्तं कथ्यते।।

### अष्टाविंशी

**एजं॑तु दश॑मास्यो॒ गर्भो॑ ज॒राय॑णा स॒ह। यथा॒यं वा॒युरेज॑ति यथा॑ समु॒द्रऽएज॑ति। ए॒वायन्दश॑मास्यो॒ऽअस्र॑ज्ज॒राय॑णा स॒ह ।।२८।।**

**अन्वय :** दशमास्योगर्भः जरायुणा सह एजतु। यथा अयं वायुः एजति, यथा समुद्रः एजति एवं अयं दशमास्यः गर्भः जरायुणा सह अस्त्रत्।

अवमृथ के पश्चात् मुख्यरूप से चार कृत्य शेष रहते हैं। उदयनीयेष्टि अनुवन्ध्यायाग उदवसानीया इष्टि तथा देविकाहवींषि।

**व्याख्या :** दसमहीने का यह पूर्णगर्भ जरायु के सहित अपने स्थान से गतिशील हो। (जिस प्रकार यह वायु गतिशील है तथा समुद्र गतिशील है, ठीक उसी प्रकार यह सम्पूर्ण अवयवसहित गर्भ जरायु के साथ बाहर आवे।

यहाँ अनुवन्ध्या गौ का ग्रहण किया गया है। कलियुग में इसके स्थान पर पयस्या याग करने का विधाान है।

**म० :** 'निरुह्यमाणमभिमन्त्रयत एजतु दशमास्य इति' (का. 25। 10। 7)। यद्यनूबन्ध्या वशा गर्भिणी स्यात्तदा विशसने मातुः सकाशात्पृथक् क्रियमाणं गर्भमभिमन्त्रयेत। अवसानत्रययुक्ता गर्भदेवत्या महापंक्तिः। अष्टाक्षराः षट् पादा यस्याः सा महापंक्तिः। गर्भः जरायुणा सह एजतु। 'एजृकम्पने'। जरायुर्गर्भवेष्टनं तेन सह कम्पतां चलतु। किंभूतो गर्भः। दशमास्यः दश मासा जाता यस्य सः। दशमासकालावच्छिन्न इव चलत्वित्यर्थः। कथं चलतु तत्राह। यथा येन प्रकारेणायं वायुरेजति चलति यथा च समुद्र

एजति। एतौ हि सदा कम्पनशीलौ। एवेति निपात एवमर्थे। एवमयं दशमास्यः संपूर्णावयवो गर्भो जरायुणा सह अस्त्रत्स्त्रंसता निर्गच्छतु। यद्यप्ययं गर्भो दशमास्यो नास्ति तथापि संपूर्णस्येव निर्गमनमाशास्यते। 'तमेतदप्यदशमास्य सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति' (4। 5। 2। 6) इति श्रुतेः 'स्त्रंस अधःपतने' व्यत्ययेन परस्मैपदे शपो लुकि च कश्ते 'हल्ङ्याब्भ्यः-' (पा. 6। 1। 68) इति तिपि लुप्ते 'वावसाने' (पा. 8। 4। 56) इति सस्य दत्वे 'अनिदिताम्-' (पा. 6। 4। 24) इति नलोपे अडागमे च अस्त्रदिति रूपम् ।।28।।

### एकोनत्रिंशी

**यस्यै॑ ते य॒ज्ञियो॒ गर्भो॒ यस्यै॒ योनि॑र्हिर॒ण्ययी॑। अङ्गा॒न्यह्रु॑ता यस्य॒ तं मा॒त्रा सम॑जीगम॒ꣳ स्वाहा॑ ।।२९।।**

**अन्वय :** (हे वशे!) यस्यै (यस्याः) ते यज्ञियो गर्भः यस्यास्तव हिरण्ययी योनिः यस्य च (गर्भस्य) अंगानि अह्रुता (अह्रुतानि) तं मात्रा समजीगमम्। (सङ्गमयामि)।

**व्याख्या :** हे वशे! तुम्हारा गर्भ यज्ञसमुद्भूत है तथा तुम्हारी योनि सुवर्णमयी है। उत्पन्न होनेवाले गर्भ के सभी अङ्ग सुदृढ़ हों, उसे मैं उसकी माता से मिलाता हूँ। यह हवि सुहुत हो।

**म० :** 'अवदानान्यनुजुहोति यस्यै त इति' (का. 25। 10। 11)। वशावदानानि हुत्वा गर्भरक्तं जुहुयात्। वशादेवत्यानुष्टुप्। हे वशे, यस्यास्ते तव गर्भो यज्ञियः यज्ञार्हः यस्यै यस्याश्च तव योनिर्हिरण्ययी सुवर्णमयी 'ऋत्व्यवास्त्व्य-' (पा. 6।4।175) इति निपातः। सुवर्णमयी मन्त्रेण क्रियत इत्यर्थः। ताहशीं त्वां गर्भेण संगमयामीति शेषः। यस्य गर्भस्यांगान्यहुता। 'हु कौटिल्ये' 'हुह्वरेश्छन्दसि' (पा. 7। 2। 31) इति हुरादेशो निष्ठायाम्। अकुटिलानि अखण्डितानि तं गर्भं मात्रा जनन्यानूबन्ध्यालक्षणया समजीगमं संगमयामि। गमेर्ण्यन्तस्य लुङि चङि रूपम्। स्वाहेति होमार्थः ।।29।।

### त्रिंशी

**पु॒रु॒द॒स्मो वि॒षु॑रूप॒ इन्दु॑र॒न्तर्म॑हि॒मान॑मानञ्ज॒ धीरः॑। एक॑पदीं द्वि॒पदीं॑ त्रि॒पदी॒ञ्चतु॑ष्पदीम॒ष्टाप॑दी॒म्भुव॒नानु॑ प्रथन्ता॒ꣳ स्वाहा॑ ।।३०।।**

**अन्वय :** (हे गर्भ!) त्वं) पुरुदस्मः विषुरुपः इन्दु अन्तः धीरः महिमानः मानञ्च व्यक्तीकरोति। एकपदीं द्विपदीं त्रिपदीं चतुष्पदीम् अष्टापदीं भुवना भुवनानि अनुप्रथन्ताम् स्वाहा।

**व्याख्या :** हे गर्भ! तुम विपुल धन प्रदाता तथा विविधरुपधारण करने वाले सोम के समान स्त्री के उदर में स्थित शान्त स्वभाववाले हो। इससे उत्पन्न होने वाली सन्तान, एकपदी, द्विपदी त्रिपदी चतुष्पदी तथा अष्टपदी होकर समस्त भुवनों में विख्यात हो। यह आहुति तुम्हारे लिए है। यहाँ सोम के रूप में गर्भ की स्तुति की गई है।

**म॰ :** 'स्विष्टकृतमनुजुहोति पुरुदस्म इति' (का. 25। 10। 15)। प्रचरण्यां स्त्रुचि प्रतिप्रस्थाता सर्वं गर्भरसमवदायाध्वर्युणा स्विष्टकृद्धोमे कृते सति जुहुयात्।। गर्भदैवत्यं यजुः। इन्दुरूपेण गर्भः स्तूयते। इन्दुः क्लेदनरूपः सोमसदृशो गर्भो महिमानं महत्त्वमानञ्च व्यक्तीकरोतु। अज्जतेर्व्यक्कीकरणा-र्थस्य लिटि रूपम् 'तस्मान्नुड् द्विहलः' (पा. 7। 4। 71) इति नुडागमः। विशेषणैर्महिमानमाह। कीदृश इन्दुः। पुरुदस्मः पुरु दस्म यस्य बहुदानयुक्तः। विषुरूपः बहुरूपः अन्तरुदरे स्थितः धीरो मेधावी एवंभूतं महिमानमानश्चेत्यर्थः। एवं महिमवतो गर्भस्य मातरमनूबन्ध्यां भुवना भुवनानि भूतजातानि अनुप्रथन्ता प्रख्यातां कुर्वन्तु। विशेषणैः प्रख्यातिमाह कीदृशीम्। एकपदीमेकं पदं यस्यास्तां वपयैकपदयुताम्। द्विपदीं वपया अश्वै द्विपदयुताम्। त्रिपदीं त्रीणि पदानि यस्यास्तामुपयाहोमैस्त्रिपदीं। चतुष्पदीं पत्नीसंयाजैचतुर्भिः पादैर्वा चतुः पादयुताम्। अष्टापदीं स्वपादैर्गर्भपादैश्चाष्टपादयुताम् एवं भूतां वशां गणयित्वा भूतान्यनुप्रथन्तामिति संबन्धः। स्वाहा सुहुतमस्तु ।।30।।

## एकत्रिंशी

**मरुतो यस्य हि क्षये पाथा दिवोविमहसः। स सुगोपातमो जनः ।।३१।।**

**अन्वय :** (हे) दिवो विमहसः मरुतः! यस्य हि क्षये यज्ञगृहे पाथा सोमपानं कुरुथ हि स जनः सुगोपातमः।

**व्याख्या :** द्युलोकसम्बन्धि विशिष्टतेज से युक्त हे मरुतो! जिस यजमान की यज्ञशाला में आप लोग सोमपान करते हैं, वह निश्चय ही आप से अत्यन्त रक्षित है।

**म० :** 'समिष्टयजुरन्ते शामित्र एव जुहुयातिष्ठन्मरुत इत्यस्वाहाकृत्येति' (का. 25। 10। 18)। समिष्टयजुर्होमान्ते शामित्राग्नवेव अस्वाहान्तेन मन्त्रेणोष्णीषवेष्ठितं गर्भं जुहोति मन्त्रान्ते स्वाहाकारमनुचार्य जुहुयादित्यर्थः। मरुद्देवत्या गायत्री गोतमहष्टा। हे देवो विमहसः विशिष्टं महो येषां से द्युलोकसंबन्धिना विशिष्टेन महसा तेजसा युक्ताः। यद्वा विशिष्टं महन्ति पूजयन्ति ते विमहसः द्युलोकस्य पूजयितारो हे मरुतः, यस्य यजमानस्य क्षये यज्ञगृहे यूयं पाथ सोमपानं कुरुथ। 'पा पाने' शपो लुक् पिबादेशाभवश्च छान्दसः संहिताया दीर्घः 'द्वयचोऽतस्तिङः' (पा. 6। 3। 135) इति सूत्रेण। हि निश्चितं स जनः यजमानाख्यः सुगोपातमः गोपायतीति गोपा रक्षकः अत्यन्तं शोभनो गोपा यस्य स सुगोपातमः युष्मदुगुप्तानां भयं नास्तीत्यर्थः ।।31।।

### द्वात्रिंशी

**म॒ही द्यौः पृ॑थि॒वी च॑ न इ॒मं य॒ज्ञं मि॑मिक्षताम्। पि॒पृ॒तां नो॒ भरी॑मभिः ।।३२।।**

**अन्वय :** मही, द्यौः, पृथिवीच, नः इमं यज्ञं मिमिक्षताम्। भरीमभिः नः पिपृताम्।

**व्याख्या :** महान्द्युलोक तथा भूलोक हमारे इस यज्ञ को अपने अपने भागों से (रसों से) पूर्ण करे, तथा हिरण्य पशु धान्यादि से हम समृद्ध हों।

यहाँ पर अग्निष्टोमयाग की पूर्णता होती।

**म० :** 'मही द्यौरित्यंगारैरभ्यूहतीति' (का. 25। 10। 18)। शामित्रे क्षिप्तं गर्भमगारैश्छादयेत्। द्यावापृथिवीदेवत्या गायत्री मेधातिथिदृष्टा। मही महती द्यौः द्युलोकः पृथिवी भूलोकश्च नोऽस्माकमिमं यज्ञं मिमिक्षताम्। 'मिह सेचने' सन्नतः सेक्तुमिच्छतां। स्वैःखैर्मागैः पूरयतामित्यर्थः। भरीमभिः भरणैर्हिरण्यपशुधान्यादिभिः स्वैः स्वैर्भागैनोऽस्मदीयं गृहं पिपृतां पूरयताम् ।।32।। इत्यग्निमष्टोममन्त्राः समाप्ताः।।

### त्रयस्त्रिंशी

**आति॑ष्ठ वृत्रहन्रथं॑ यु॒क्ता ते॒ ब्रह्म॑णा॒ हरी॑। अ॒र्वा॒चीन॒ᳬसु ते॒**

**मनो ग्रावा कृणोतु वग्नुना। उपयामगृहीतोसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ।।३३।।**

**अन्वय :** (हे) वृत्रहन्! (इंद्र!) ते हरी ब्रह्मणा रथं युक्तौ, रथम् आतिष्ठ। ग्रावा वग्नुना ते मनः अर्वाचीनं सुकृणोतु। उपयाम गृहीतोऽसि-त्वा षोडशिने इन्द्राय। एष ते योनिः। त्वा षोडशिने इन्द्राय।

**व्याख्या :** हे वृत्रहन्ता इन्द्र! तुम्हारे दोनों घोड़े यथाविधि (मन्त्र पाठ पूर्वक) रथ में संयुक्त हैं, अतः रथ में बैठों। यह प्रस्तर अपने शब्द द्वारा तुम्हारे मन को हमारी ओर आकर्षित करे। हे सोम! तुम उपयाम संज्ञक पात्र द्वारा गृहीत हो। सोलहस्तोत्रों से युक्त इन्द के लिऐ तुम्हें गहण करता हूँ। हे ग्रह। यह तुम्हारा स्थान है। इन्द्र के लिए तुम्हें स्थापित करता हूँ।

**म॰ :** अथ षोडशी अग्रे पवस्व (क. 37) इत्यस्मात्प्राक् 'प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं खादिरेण चतुःस्त्रक्तिनातिष्ठ युक्ष्वा हीति वेति' (का. 12। 5। 2(। प्रातःसवने आग्रयणग्रहणानन्तरमाग्नेयम-तिग्राह्यमादाय चतुःकोणेन खादिरोलूखलेनातिष्ठ युक्ष्वा हीति मन्त्रयोरन्यतरेण सोपयामेन षोडशिग्रहं गृह्णीयात्। इन्द्रदेवत्यानुष्टुब् गोतमदृष्टा। हे वृत्रहन्निन्द्र। ते तव हरी हरितवर्णावश्वौ ब्रह्मणा त्रयीलक्षणेन इन्द्रागच्छेत्यादिमन्त्रेण युक्ता रथे संयुक्तौ अतस्त्वं रथमातिष्ठ आरोह। इन्द्राह्वानं श्रुत्वास्मन्नि-योजनकालः प्राप्त इति मत्वाश्वौ स्वयमेव रथे युञ्जाते इति युक्ता इत्युक्तम्। किंच ग्रावा सोमाभिषवपाषाणः ते तव रथारूढस्य मनोऽर्वाचीनम-स्मद्यङ्भिमुखं सु कृणोतु सुतरां करोतु। केन वयुना। वग्नुरिति वाऽनामंसु पठितम्। वाचा श्रवणीयेन सोमाभिषवशब्देन। हे सोम, उपयामेन गृहीतोऽसि षोडशिने। षोडशं स्तोत्रमस्यास्तीति षोडशी तस्मै इन्द्राय त्वा त्वां गृह्णामीति शेषः। सादयति हे ग्रह, एष ते योनिः स्थानं षोडशिनं इन्द्राय त्वां सादयामीति शेषः ।।33।।

**चतुस्त्रिंशी**

**युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा। अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ।।३४।।**

**अन्वय** : (हे इन्द्र!) केशिनौ हरी हरितवर्णौअश्वौ वृषणा कक्ष्यप्रा युक्ष्व (रथेन संयोजय)। अथ हे इन्द्र! सोमपाः नः गिराम् उपश्रुतिं चर। हे सोम त्वम् उपयाम गृहीतोऽसि, त्वा षोडशिने इन्द्राय गृह्णामि एष ते योनिः। त्वा षोडशिने इन्द्राय।

**व्याख्या** : हे इन्द्रदेव! आप लम्बे-लम्बे बालों वाले तरुण तथा स्थूलअंगावयवसम्पन्न अपने दोनों अश्वों को रथ से संयुक्त करें। आप सोमपान करते हुए हमारी वाणी को सुने। हे सोम! तुम उपयामपात्र द्वारा गृहीत हो। सोलहस्तोत्रों से युक्त इन्द्रदेवता के लिए तुम्हें ग्रहण करता हूँ। हे ग्रह! यह तुम्हारा स्थान है। तुम्हें इन्द्र के लिए स्थापित करता हूँ।

**म०** : द्वितीयो ग्रहणमन्त्रः। इन्द्रदेवत्यानुष्टुप् मधुच्छन्दोदृष्टा। हे इन्द्र, हि निश्चितं हरी हरितवर्णौ त्वदीयावश्वौ युक्ष्वा रथेन संयोजय। कीहशो हरी। केशिना प्रलम्बकेसरी तथ वृषाणा। 'वृषा सेचने'। वृषाणौ वर्षितारौ सेक्तारौ तरुणौ। 'वा षपूर्वस्य निगमे' (पा. 6। 4। 9) इति दीर्घाभावः। तथा कक्ष्यप्रा कक्षे भवः कक्ष्यः अश्वसन्नहरज्जुः कक्ष्यं मध्यबन्धन प्रातः पूरयतस्तौ कक्ष्यप्रौ स्थूलावयवादित्यर्थः। अथानन्तरं रथारोहणानन्तरं हे इन्द्र, सोमपाः सोमपानं कुर्वाणोऽस्मदीयानां गिरामृग्यजुः सामलक्षणानां वाचामुपश्रुतिमुपश्रवणं चरगच्छ प्राप्नुहि। अस्मद्गिरः श्रण्वित्यर्थः। वाचं श्रुत्वास्मदृहमागच्छेत्यर्थः। उपयाम एष ते एते व्याख्याते। अथेत्यत्र। अथेत्यत्र संहितायां दीर्घः ।।34।।

### पञ्चत्रिंशी

**इन्द्रमिद्धरीं वहतोऽप्रतिधृष्टशवसम्। ऋषींणां च स्तुतीरूपं यज्ञं च मानुंषाणाम्। उपयामगृंहीतोऽसीन्द्राय त्वा षोडशिनं एष ते योनिरिन्द्राय त्वा षोडशिनें ।।३५।।**

**अन्वय** : हरी (अश्वौ) ऋषीणां स्तुतीरुप अप्रतिधृष्टशवसम् इन्द्रमेव (वहतः) च मानुषाणां यज्ञमुप (हरी इन्द्रं वहतः)। हे सोम त्वम् उपयाम् गृहीतोऽसि। त्वा षोडशिने इन्द्राय एष ते योनिः। त्वा षोडशिने इन्द्राय।

**व्याख्या** : हरितवर्ण वाले दोनोंअश्व वसिष्ठादि ऋषियों की स्तुति के समीप अर्थात् इनकी स्तुति को सुनकर इनके पास इन्द्र आते

है। तथा यज्ञ के समीप भी इन्द्र को ही ले जाते हैं, जो इन्द्र पराभव से रहित अत्यन्त बल सम्पन्न है। हे सोम! तुम उपयाम द्वारा गृहीत हो। मैं इन्द्रदेव के लिए तुम्हें ग्रहण करता हूँ। हे ग्रह। यह तुम्हारा स्थान है। सोलह स्तोत्रों से युक्त इन्द्र के लिए तुम्हें स्थापित करता हूँ।

**म॰ :** षोडशिग्रहे तृतीयो मन्त्रविकल्पः 'आग्रयणाद्वेन्द्रमिद्धरी इति गृहीत्वेति' कठसूत्रेक्तेः। इन्द्रदेवत्यानुष्टुप गोतमदृष्टा। इत् एवार्थे। हरी हरितवर्णावश्वौ ऋषीणां स्तुतीरुप वसिष्टादीनां मुनीनां स्तुतिसमीप इन्द्रमित् इन्द्रमेव बहतः प्रापयतः। च पुनः मानुषाणां यजमानानां यज्ञमुप यज्ञसमीपे च हरी इन्द्रं वहतः। किंभूतमिन्द्रम्। अप्रतिघृष्टशवसम् प्रतिधर्षयितुं पराभवितुं। शक्यं प्रतिपृष्ठं न प्रतिघृष्टमप्रतिघृंष्टं शवो बलं यस्य सोऽप्रतिघृष्टशवास्तम्। उपयाम एष ते इति व्याख्याते ॥35॥

### षट्त्रिंशी

**यस्मान्न जातः परों अन्योऽअस्ति यऽआंविवेश भुवंनानि विश्वां। प्रजापंतिः प्रजयां सꣳरराणस्त्रीणि ज्योतींꣳषि सचते च षोंडशी ॥३६॥**

**अन्वय :** यस्मात् परो न जातः, नान्यः अस्ति, यः विश्वा भुवनानि आविवेश। स प्रजापतिः प्रजया संरराणः त्रीणि ज्योतीषिं सचते। स षोडशी।

यहाँ षोडशी की परब्रह्म रूप से स्तुति की गई है।

**व्याख्या :** जिस पुरुष से बढ़कर उत्कृष्ट अन्य कोई भी (देवादि) आज तक उत्पन्न नहीं हुए, जो समस्त जीवों में अन्तर्यामी रुप से प्रविष्ट है। वह प्रजापति प्रजाओं के साथ क्रीड़ा करता हुआ अग्नि वायु एवं सूर्य रुप, तीन प्रकाशमानशक्तियों को अपने तेज से प्रकाशित करता हैं वही ब्रह्म सोलह कलावाला लिंगशरीर से चराचर में व्याप्त है।

**म॰ :** 'उपस्थायैनं यस्मान्न जात इति' (का. 12। 5। 19)। षोडशिग्रहमुपतिष्ठेत्। इन्द्रदेवत्या त्रिष्टुप् विवस्वदृष्टा। परब्रह्मरूपेण षोडशी स्तूयते। यस्मात्पुरुषादन्यो व्यतिरिक्तः परः उत्कृष्टो देवादिर्जातः संभूतो नास्ति न विद्यते यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आविवेश अन्तर्यामिरूपेण प्रवृष्टवान्सः प्रजापतिः स्वोत्पन्नप्रजापालकस्त्रीणि

ज्योतींषि अग्निवायुसूर्यलक्षणानि तेजांसि विषयज्ञापकानि सचते सेवते। स्वतेजसा तज्ज्योतिषामुज्जीवनं करोतीत्यर्थः। 'येन सूर्यस्तपति तेजसेद्ध' इत्यादिश्रुतेः। 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (भ. गी. 15। 12) इति स्मृतेश्च। किंभूतः प्रजापतिः। प्रजया संरराणः प्रजारूपेण सम्यग्रममाणः। तथा षोडशी षोडशकलात्मकलिंगशरीरोपहितः स एव सर्वव्यवहाराश्रय इत्यर्थः। 'यः सर्वेषु भूतेषु तिष्ठति' त्यादिश्रुतेः ॥36॥

## सप्तत्रिंशी

**इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतु रग्रंऽएतम्। तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥३७॥**

**अन्वय** : (हे षोडशीग्रह!) इन्द्रश्च सम्राट् वरुणः राजा, तौ ते (तव) अग्रे एतं भक्षं चक्रतुः। तयोः भक्षम् अनुअहं भक्षयामि। वाग् देवी जुषाणा प्राणेन सह सोमस्य (सोमेन) तृप्यतु।

**व्याख्या** : हे षोडशीग्रह! इन्द्रदेव सम्राट (वाजपेययाजी) है। वरुणदेव राजा (राजसूययाजी) है। इन देवों ने ही सर्वप्रथम सोमपान है। इसके बाद मैं सोम का पान करता हूँ जिससे वाग्देवीसरस्वती प्राणदेवता के साथ सोम पान से तृप्ति को प्राप्त करें।

**म०** : 'इन्द्रश्च सम्राडिति भक्षणमिति'। षोडशिग्रहं भक्षयेत्। इन्द्रवरुणदेवत्या षोडशिदेवत्या वा त्रिष्टुप् यजुरन्ता। अन्त्यपादौ द्वादशार्णौ सह प्राणेनेति यजुः विवस्वदृष्टा। हे षोडशिग्रह, तौ। देवो इन्द्रावरुणौ ते तव एतं सोममग्रे प्रथमं भक्षं चक्रतुः। तौ कौ। इन्द्रो वरुणश्च। चकारौ समुच्चये। किंभूत इन्द्रः। सम्राट् परमैश्वर्ययुक्तः वाजपेययाजीत्यर्थः। किंभूतो वरुणः। राजा राजसूययाजी 'राजा वै राजसूयेनेष्टा भवति सम्राड्वाजपेयेन' (5। 1। 1। 13) इति श्रुतेः। तयोरिन्द्रावरुणयोः संबन्धिनं भक्षमनु पश्चात् अहम् भक्षयामि सोमं पिबामि। जुषाणा मदीयेन भक्षणेन सेवमाना वाग्देवी सरस्वती प्राणेन प्राणदेवतया सह सोमस्य तृप्यतु सोमेन तृप्ता भवतु। 'तृप्यर्थानां करणे षष्टी वे'ति सोमशब्दात् षष्ठी। स्वाहा सुहुतमस्तु ॥37॥ इति षोडशियागः संपूर्णः॥

## अष्टात्रिंशी

**अग्ने पवस्व स्वपा अस्मै वर्चः सुवीर्यम्। दधद्रयिं मयि पोषम्।। उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे। अग्ने वर्चस्विन्वर्चस्वांस्त्वं देवेष्वसि वर्चस्वानहं मनुष्येषु भूयासम् ।।३८।।**

यहाँ से द्वादशाह यज्ञ के मन्त्र प्रारम्भ होते है।

**अन्वय :** हे अग्ने! त्वम् अस्मे वर्चः सुवीर्यं पवस्व। मयि रयिं पोषं दधत्। हे सोम उपयाम गृहीतः असि, वर्चसे अग्नये त्वा (गृह्णामि)। हे वर्चस्विन् अग्ने! त्वं देवेषु वर्चस्वान् असि। अहं मनुष्येषु वर्चस्वान् भूयासम्।

**व्याख्या :** हे सुकर्माअग्निदेव आप हमारे लिए ब्रह्मतेज प्रदान करें। मुझे धन धान्य से पुष्ट करें। हे सोम! तुम उपयाम ग्रह द्वारा गृहीत हो। तेजस्वी अग्निदेव के लिए तुम्हें ग्रहण करता हूँ। हे ग्रह! यह तुम्हारा स्थान है। तेजस्वीअग्निदेव के लिए तुझे स्थापित करता हूँ। हे अग्निदेव आप देवताओं में अधिक दीप्तिमान (तेजसम्पन्न) है। अतः मैं भी (आप की कृपा से) मनुष्यों में तेजस्वी बनूं।

**म० :** अथ द्वादशाहमन्त्रः। 'पृष्ठ्यः षडहस्तत्रातिग्राह्यग्रहणं व्यूहे पूर्णेऽग्ने पवस्वोत्तिष्ठन्नहश्रमित्यध्यहमेकैकम्' (का. 12। 3। 1–2) 'अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्टेति भक्षणं यजमानैरिति (का. 6) अस्ति कश्चित् पृष्ठ्मः षडहाख्यः क्रतुः। स तु षड्भिरहोभिर्निष्पाद्यः। तत्र पूर्वस्मिन्नहस्त्रये क्रमेणाग्ने पवस्वेत्यादि भिर्मन्त्रैरतिग्राह्यन्ग्रहोन् गृह्णीयात्तथैवाग्रे वर्चस्विन्नत्यादिभिर्मन्त्रैस्तत्तग्रहशेषं भक्षयेत्। तत्र प्रथमो यथा। अग्नेपवस्य। अग्निदेवत्या गायत्री वैखानसदृष्टा। आद्यौ सप्ताणौं पादौ। एषा यजुरन्ता। उपयाम एष त इति द्वे यजुषी। हे अग्नेत्वमस्मै अस्मासु सुवीर्यं शोभनं वीर्य यस्मिस्तादृशं शोभनसामर्थ्योपेतं वर्चो ब्रह्मवर्चसं पवस्व। पव गत्यर्थः अन्तर्भूतण्यर्थः। गमय प्रापय। 'सुपां सुलुक्' (पा. 7। 1। 39) इति विभक्तेः शेआदेशे अस्मे इति रूपम्। किंभूतस्त्वम्। स्वपाः। अप इति कर्मनाम। शोभनान्यपांसि यस्य स स्वपाः सुकर्मा। एवमृत्विग्भिः सह संप्रार्थ्य स्वयं याचते। मयि यजमाने रयिं धनं दधत् धारयन् स्थापयन्सन्

पोषं पुष्टिं पुत्रपश्वादिवृद्धिं पवस्व प्रवर्तयेति संबन्धः। उपयामयतीत्युपयामो ग्रहः हे सोम, तेन त्वं गृहीतोऽसि। हे ग्रह, वर्चसे वर्चस्विने तेजस्विनेऽग्नये त्वां गृह्णामीति शेषः। सादयति एष खरप्रदेशस्तव योनिः स्थानं वर्चस्विनेऽग्नये त्वां सादयामीति शेषः। भक्षणमन्त्रः। हे वर्चस्विन् विशिष्टतेजोयुक्त हे अग्ने, त्वं देवेषु इन्द्रादिषु मध्ये वर्चस्वानतिदीप्तिमानसि अतस्त्वत्प्रसादादहमपि मनुष्येषु मध्ये वर्चस्वान्ब्रह्मवर्चसपंपन्नो भूयासं भवेयम् ।।38।।

### एकोनचत्वारिंशी

**उत्तिष्ठन्नोजसा सह पीत्वी शिप्रेऽअवेपयः। सोममिन्द्र चमूसुतम्। उपयामगृहीतोऽसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजसे। इन्द्रौजिष्ठौजिष्ठस्त्वन्देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासम् ।।३९।।**

**अन्वय :** हे इन्द्र! ओजसा सह उत्तिष्ठन् चमूसुतं सोमं पीत्वी शिप्रे हनूनासिके, अवेपयः कम्पितवानसि। हे ग्रह!! त्वम् उपयाम गृहीतोसि। ओजसे इन्द्राय त्वा (गृह्णामि)। एष ते योनिः ओजसे इन्द्राय। हे ओजिष्ठ इन्द्र! त्वं देवेषु ओजिष्ठ असि, अहं मनुष्येषु ओजिष्ठः भूयासम्।

**व्याख्या :** हे इन्द्र! आप अत्यन्त साहस सम्पन्न होकर अधिषवण चर्म पर अभिषुत, सोमरस को पीकर प्रसन्नता से हनु तथा नासिका को हिलाएँ। हे ग्रह! तुम उपयामसंज्ञकग्रहपात्र में गृहीत हो अतः बलवान इन्द्र के लिए तुम्हारा ग्रहण करता हूँ। हे ओजिष्ठ इन्द्रदेव! जिस प्रकार देवों में आप सर्वाधिक बलशाली है, उसी प्रकार मनुष्यों में मैं बलिष्ठ बनूँ।

**म० :** द्वितीयोऽतिग्राह्यग्रहणमन्त्रः। इन्द्रदेवत्या गायत्री कुरुस्तुतिदृष्टा यजुरन्ता। हे इन्द्र, त्वमोजसा बलेन सह उत्तिष्टन्नुत्सगादुद्रच्छन्सन् शिप्रे हनू नासिके वा अवेपयः 'टुवेपृकम्पने' कम्पितवानसि। किं कृत्वा सोमं पीत्वो पीत्वा। ''स्नात्वादयश्च' (पा. 7। 1। 49) इति निपातः। किंभूतं सोमम्। चमूसुतं चम्वामधिषवणचर्मणि सुतमभिषुतम् सोमपानं कृत्वातिहर्षवशान्नासे कम्पितवानित्यर्थः। हे ग्रह, त्वमुपयामगृहीतोऽसि ओजसे बलवते इन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः ओजस इन्द्राय सादयामि। भक्षणमन्त्रः हे इन्द्र, हे ओजिष्ठ ओजो बलमस्यास्तीत्योजस्वी। 'अस्माया-' (पा. 5। 2। 121) इत्यादिना विनिप्रत्ययः। अत्यन्तमोजस्वी ओजिष्ठ 'अतिशायने तमविष्टनौ (पा. 5। 3। 55) इति इष्ठन्प्रत्ययः।

'विन्मतोर्लुक्'(पा. 5। 3। 65) इतीष्ठनि परे विनिलोपः टिलोपश्च। तत्संबोधनमोजिष्ठ अतिबलयुक्त, त्वं यथा देवेष्वोजिष्ठोऽसि एवं मनुष्येषु मध्येऽहमोजिष्टोऽतिबलो भूयासम् ।।39।।

## चत्वारिंशी

**अदृश्रमस्य केतवो व्विरश्मयो जनाँ २ऽअनु। भ्राजन्तोऽअग्नयो यथा। उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय। सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहं मनुष्येषु भूयासम् ।।४०।।**

**अन्वय :** अस्य सूर्यस्य केतवः रश्मयः जनान् वि अनु अदृश्रम् (अदर्शम्) यथा भ्राजन्तः अग्नयः। हे ग्रह! उपयाम गृहीतः असि भ्राजाय सूर्याय त्वा (गृह्णामि) एष ते योनिः भ्राजाय सूर्यायं त्वा स्थापयामि। हे सूर्य त्वं देवेषु भ्राजिष्ठ असि अहं मनुष्येषु भ्राजिष्ठः भूयासम्।

**व्याख्या :** इस सूर्य की प्रज्ञाप्रदायक किरणें सभी मनुष्योंमें व्यापक रूप से दिखलाई देती है जैसे सभी घरों में प्रदीप्तअग्नियाँ दिखाई देती है। हे ग्रह! तुम उपयामग्रहपात्र में गृहीत हो। दीप्यमान सूर्य के लिए तुम्हें ग्रहण करता हूँ। हे ग्रह! यह तुम्हारा स्थान है, प्रदीप्त सूर्य के लिए तुम्हें स्थापित करता हूँ। हे अतिदीप्तसूर्य! जिस प्रकार देवों में आप अतितेजस्वी हैं उसी प्रकार मनुष्यों में मैं भी अतितेजस्वी हो जाऊँ।

**म० :** तृतीयोऽतिग्राह्यमन्त्रः। सूर्यदेवत्या गायत्री प्रस्कण्वदृष्टा यजुरन्ता। दृशेर्लुङि 'इरितो वा' (पा. 3। 1। 57) इति च्लेरङ्द्रेशे 'ऋदृशोऽङि गुणः' (पा. 2। 4। 16) इति उत्तमैकवचने अदर्शमिति प्राप्ते 'शीडने रुडेत्तेर्विभाष बहुलं छन्दसीति' (पा. 7। 1। 6-8) दृशेरुत्तरस्य मिबादेशस्यामो रुडागमो धातोर्गुणाभावश्छान्दसः। अदृश्रमिति रूपम् कर्मणि लुङि प्रथमपुरुषबहुवचनस्थाने द्रष्टव्यमहश्येन्तेत्यर्थे। वीत्युपसर्गोऽहश्रमित्यनेन संवध्यते। केतुरिति प्रज्ञानामसु पठितम्। अस्य सूर्यस्य केतवः प्रज्ञाहेतवः सर्वपदार्थज्ञानकृतो रश्मयः किरणा जनाननु सर्वप्राणिनोऽनुगता वि अदृश्रम् विशेषेणादृश्यन्त। सूर्यकराः भ्राजन्तो ज्वलन्तोऽग्नयो वह्नयो यथा जनानुगता दृयन्ते तद्वत्। हे ग्रह, त्वमुपयामेन गृहीतोऽसि। भ्राजयते दीप्यतेऽसो भ्राजस्तस्मै सूर्याय त्वां गृह्णामि। सादयति एष तव योनिः भ्राजाय दीप्ताय

सूर्याय त्वां सादयामि। तृतीयोऽतिग्राह्यभक्षणमन्त्रः। अत्यन्तं भ्राजो भ्राजिष्ठः हे भ्राजिष्ठ अतिदीप्त हे सूर्य, त्वं यथा देवेषु भ्राजिष्ठोऽसि तथाहमपि मनुष्येषु भ्राजिष्टोऽतिदीप्तिमान्भूयासम् ।।40।। इति द्वादशाहः संपूर्णः।।

## एकचत्वारिंशी

**उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्। उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ।।४१।।**

**अन्वय :** त्यं (तं) जातवेदसं देवं सूर्यं केतवः उ (आशु) उद्वहन्ति। विश्वस्य दृशे। हे सोम उपयाम गृहीतोऽसि स्थापयामि भ्राजाय सूर्याय त्वा (गृह्णामि) एष ते योनिः भ्रजाय सूर्याय त्वा।

**व्याख्या :** उस प्रसिद्ध सर्वज्ञ प्रकाशमान सूर्य भगवान् को, रश्मियाँ शीघ्र ही सम्पूर्ण संसार कोदेखने के लिए उदयाचल से उपर की ओर ले जाती है। हे ग्रह! तुम उपयाम द्वारा गृहीत हो, प्रकाशमानसूर्य के लिए तुम्हें ग्रहण करता हूँ। यह तुम्हारा स्थान है। प्रकाशमान सूर्य के लिए स्थापित करता हूँ।

**म० :** 'उदु त्यमिति ग्रहग्रहणमिति' (का. 13। 2। 11) गवामयनाख्यस्य संवत्सरसत्रस्य विषुवन्नामके मध्यमेऽहानि सौर्यपशूपालम्भादूर्ध्वमतिग्राह्यग्रहणं कार्यम्। सौरी गायत्री देवदृष्टा पुनर्व्याख्यायते (अ. 7। क. 41)। त्यं तं प्रसिद्धं जातवेदसं जातानां प्रजानां ज्ञातारं जातप्रज्ञं वा देवं देवनशीलं सूर्यं केतवः प्रज्ञाहेतवः किरणा उ आशु उद्वहन्ति उदयाचलादुद्गमयन्ति। किमर्थं। विश्वाय। षष्ठ्यर्थे चतुर्थी। विश्वस्य दृशे दर्शनाय। सर्व जगद्रष्टुमित्यर्थः। उपयाम एष ते व्याख्याते ।।41।।

## द्विचत्वारिंशी

**आजिघ्र कलशं मह्या त्वां विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः ।।४२।।**

**अन्वय :** हे महि! धेनो (त्वं) कलशम् आजिघ्र आघ्राणं कुरु, इन्दवः त्वा आविशन्तु। सा ऊर्जा पुनः निवर्तस्व। सा नः सहस्रं धुक्ष्व। उरुधारा पयस्वती रयिः मा पुनः विशतात्।

**व्याख्या :** हे पूज्य गोमाता! तुम इस द्रोणकलश को सूंघों। इसमें स्थित सोम तुममें प्रविष्ट हो, तथा तुम विशिष्ट (दूध) रस के साथ हमारे पास लौट आवो। इस प्रकार तुम अनन्त पय आदि द्रव्यप्रदान से हमें पूर्ण करो। तुम्हारी कृपा से अधिक दूध देने वाली गौएं तथा धनादि हमें पुनः प्राप्त हों।

**म० :** 'हविर्धानाग्नीध्रयोरन्तरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति' (का. 13। 4। 19)। गर्गत्रिरात्रादावहीने त्रिसुत्ये गोसहस्त्रं दक्षिणास्ति तत्र सहत्रसंख्यापूरणी रोहिणी धेनुस्तां हविर्धानाग्नीध्रयोर्मध्यस्थां द्रोणकलशमाघ्रापयेत्। गोदेवत्या महापंक्तिः कुसुरुविन्दुदृष्टा अष्टार्णषट्पादा। महीति गोनाम। हे महि हे धेनो, त्वं कलशं द्रोणकलशाख्यं पात्रमाजिघ्र आभिमुख्येनाघ्राणं कुरु। किंच हे धेनो, इन्द्रवः सोमाः त्वा त्वामाविशन्तु द्रोणकलशस्थाः सोमास्त्वां प्रविशन्तु। किंच ऊर्जा विशिष्टरसेन पयोभूतेन सह पुनः अस्मान्प्रतिनिवर्तस्व। या त्वमेवं मया स्तुता सा त्वं नोऽमांकं सहस्त्रं धुक्ष्व सहस्त्रसंख्यं धनं देहि। यद्वा गवां सहस्त्रं यदस्माभिर्दत्तं तन्नोऽस्मभ्यं धुक्ष्या पुनर्देहि। दुहतिर्दानार्थः। किंच त्वत्प्रसादादुरुधारा बहुपयोयुक्ता पयस्वती धेनुर्मा मां पुनराविशतात् आगच्छत्वित्यर्थः। तथा रयिः धनमपि मा मामा विशतात् ।।42।।

## त्रिचत्वारिंशी

**इडे॒ रन्ते॒ हव्ये॒ काम्ये॒ चन्द्रे॒ ज्योतेऽदि॑ति॒ सर॑स्वति॒ महि॒ विश्रु॑ति। ए॒ता तेऽअघ्न्ये॒ नामा॑नि दे॒वेभ्यो॑ मा सु॒कृतं॑ ब्रूतात् ।।४३।।**

**अन्वय :** (हे) इडे, हव्ये, काम्दे, चन्द्रे, ज्योति, अदिति सरस्वति महि विश्रुति अध्न्ये ते एता नामानि देवेभ्यः मा सुकृतं ब्रूतात्।

**व्याख्या :** हे गौ! तुम मनु की पुत्री इडा के समान हो, सभी को आनन्द देने वाली हो, सभी के द्वारा आहूत हो सभी कामनाओं को पूर्ण करने वाली, आह्लाददायिनी तेजस्विनी देवमाता, दूध प्रदान करने वाली पूज्य, तथा संसार में विख्यात हो। हे सर्वथा अवध्यगोमाता! तेरे ये सब नाम हैं। मेरे सुकृत (यज्ञकर्म) को देवताओं से कहो।

**म० :** 'इडे रन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपतीति' (का. 13। 4। 20)। पूर्वोक्ताया धेनोर्दक्षिणकर्णे यजमानो जपेत् गोदेवत्या

प्रस्तारपंक्तिः कुसुरुविन्दुदृष्टा। यस्या आद्यौ पादौ द्वादशार्णौ अन्त्यावष्टार्णौ सा प्रस्तारपंक्तिः। ईड्यते स्तूयते इति इडा मनोर्दुहिता तत्तुल्या। रमयतीति रन्ता। हूयते यद्दुग्धं यज्ञेष्विति हव्या, हूयते आहूयते सर्वैरिति वा हव्या। काम्यत इति काम्या 'मनुष्याणांह्येतासु कामाः प्रविष्टाः' इति श्रुतेः। चन्दयत्याह्लादयतीति चन्द्रा। 'द्युत् दीप्तौ' द्योतयति प्रकाशयतीति ज्योता दकारस्य जः। अदितिरदीनाऽनवखण्डिता। सरस्वती सरतीति सरः क्षीरं तद्वति। सर इत्युदकनाम सर्तेरिति (नि. 9। 26) यास्कोक्तेः। उदकशब्देनात्र क्षीरमुच्यते। मही महती। विविधंश्रूयते स्तूयत इति विश्रुतिः न हन्तुं योग्या अध्न्या अहन्तव्या। तासां संबोधनानि हे धेनो एवंभूते, ते तव एता एतानि अतिशयगुणयुक्तानि नामानि एतैर्नामभिरभिहिता सती देवेभ्यः सुकृतं सुष्टु करोतीति सुकृत् तं सुकृतं शोभनकर्मकारिणं मां त्वं ब्रूहि वद। अयं यजमानः पुण्यकर्तेति देवेभ्यो वदेत्यर्थः ।।43।।

## चतुश्चत्वारिंशी

**वि नंऽइन्द्र मृधो॑ जहि नी॒चा यं॑च्छ पृतन्य॒तः। यो अ॒स्माँ २ऽअ॑भि॒दास॒त्यध॑रं गमया॒ तमः॑। उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा वि॒मृध॑ ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा वि॒मृधे॑ ।।४४।।**

**अन्वय** : हे इन्द्र! नः मृधः विजहि, विशेषेण नाशय पृतन्यतः नीचायच्छ। यः अस्मान् अभिदासति तम् अधरं तमः गमय। हे सोम त्वम् उपयाम गृहीतः असि। विमृधे इन्द्राय त्वा (गृह्णामि) (हे ग्रह!) एष ते योनिः विमृधे इन्द्राय त्वा स्थापयामि।

**व्याख्या** : हे इन्द्र! इस संग्राम में हमारे शत्रुओं को विनष्ट करें तथा युद्ध की इच्छा से आनेवालों अन्य शत्रुओं को भी दूर करें। जो हमें नष्ट करना चाहता है उसे निकृष्ट अन्धकारपूर्णनरक में पहुँचा दीजिए। हे ग्रहः! तुम उपयाम द्वारा गृहीत हो। संग्राम में अत्यन्तनिपुण इन्द्रदेव के लिए तुम्हें ग्रहण करता हूँ। हे ग्रह! यह तुम्हारा स्थान है। अतः संग्राम सामर्थ्य विशिष्ट इन्द्रदेव के लिए तुम्हें स्थापित करता हूँ।

**म०** : 'ग्रहं गृह्णाति वि न इन्द्र वाचस्पति विश्वकर्मन्निति वेति' (का. 13। 2। 17) गवानयनंस्योपान्त्ये महाव्रतेऽहनि प्राजापत्यपशूपालम्भादूर्ध्वं। मैन्द्रग्रहग्रहणे मन्त्रत्रयम्। तत्राद्यः। इन्द्रदेवत्यानुष्टुप् शासदृष्टा। हे इन्द्र,

नोऽस्माकं मृधः शत्रून्संग्रामान्वा विजहि विशेषेण नाशय। किंच पृतन्यतः नीचः यच्छ। पृतनां संग्रामं सेनां वा इच्छन्ति पृतन्यन्ति पृतन्यन्तीति पृतन्यन्तस्तान्। 'सुप आत्मनः क्यच् (पा. 3। 1। 4) इति पृतनाशब्दात्क्यचि प्रत्यये 'कव्यध्वपृतनस्यर्चि लोपः' (पा. 7। 4। 39) इति टिलोपे शतृप्रत्यये च रूपम्। पृतन्यतः सेनामिच्छतः शत्रून्नीचान्यग्भूतान् यच्छ निगृह्णीष्व। युद्धादुपरतान्कुर्वित्यर्थः किंच यश्चान्योऽस्मानभिदासति। 'दसु उपक्षये'। उपक्षयते तं शत्रुमधरं निकृष्टं तमो नरकं गमय प्रापय। संहितायां दीर्घः। हे ग्रह, त्वमुपयामेन गृहीतोऽसि विशिष्टो मृत् संग्रामो यस्य तस्मै विमृधे विष्ठिष्टसंग्रामवते इन्द्राय त्वां गृह्णामि। सादयति एष तव योनिः विमृद्गुणविशिष्टायेन्द्राय त्वां सादयामि ।।44।।

### पञ्चत्वारिंशी

**वाचस्पतिंमविश्वकर्माणमूतयें मनोजुवं वाजें अद्या हुंवेम। स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवंसे साधुकर्मा ।। उपयामगृहीतो-ऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे ।।४५।।**

**अन्वय :** अद्य वाजे (यज्ञे) ऊतये वाचस्पतिं मनोजुवं विश्वकर्माणं हुवेम। स विश्वशम्भुः साधुकर्मा नः विश्वानि हवनानि अवसे जोषत्। (जुषताम्) हे सोम त्वम् उपयाम गृहीतः असि। विश्वकर्मणे इन्द्राय त्वा (गृह्णामि)। एष ते योनिः विश्वकर्मणे त्वा इन्द्राय त्वा (सादयामि)।

**व्याख्या :** आज इस यज्ञ में अपनी रक्षा के लिए वाणी के अधिष्ठाता मनोवेगवाले सृष्टि के कर्ता इन्द्र का आवाहन करता हूँ। जो इन्द्र विश्व कल्याणसम्पादन करनेवाले, शुभकर्मों को सम्पन्न करने वाले, ऐसे हमारे आवाहन को सुनकर मेरी रक्षा के लिए आवें तथा प्रदत्तहवि को सुखपूर्वक ग्रहण करें। हे ग्रह! तुम उपयाम द्वारा गृहीत हो। सर्वकर्ता इन्द्र के निमित्त तुम्हें ग्रहण करता हूँ। हे ग्रह! यह तुम्हारा स्थान है, विश्वकर्मा इन्द्रके लिए तुम्हें स्थापित करता हूँ।

**म० :** 'अथ द्वितीयः। विश्वकर्मदेवता त्रिष्टुप् शासदृष्टा। ईदृशमिन्द्रं वाजे महाव्रतीयलक्षणान्नविषये अद्यास्मिन् दिने वयं हुवेम आह्वयाम। किमर्थम्। ऊतये अवनाय रक्षणाय। किंभूतम्। विश्वकर्माणं विश्वानि

समस्तानि जगदुत्पत्त्यादीनिकर्माणि यस्य तम्। तथा वाचस्पति वाचां पालयितारं वाचोऽधिपतिं। 'तस्मादाहुरिन्द्रो वाक्' इति श्रुतेः। तथा मनोजुवम्। जूरिति जवनाम। मनसो जूरिव जव इव जवो यस्य स मनोजूस्तम्। स इदृशं इन्द्रो नोऽस्माकं विश्वानि सर्वाणि हवनानि आह्वानानि अवसेऽन्नायान्नासमृद्धै रक्षणाय वा जोषात् जुषताम् अस्मदाह्वानं साधु साध्विति सेक्ताम्। 'लेटोऽडाटौ' (पा. 3। 4। 94) इत्यडागमे 'इतश्च लोपः परस्मैपदेषु' (पा. 3। 4। 97) तिप् इलोपे जोषदिति रूपम्। किंभूतः सः। विश्वशंभूः विश्वस्य शं मुखं भवत्यस्मादिति विश्वशंभूः साधुकर्मा शोभनकर्मकर्ता। हे ग्रह, उपयामगृहीतोऽसि विश्वकर्मणे सर्वकर्त्रे इन्द्राय त्वां गृह्णामि। सादयति एष ते योनिः विश्वकर्मणे इन्द्राय त्वां सादयामि ।।45।।

## षट्चत्वारिंशी

**विश्वंकर्मन्हुविषा वर्धनेन त्रातारमिन्द्रंमकृणोरवध्यम्। तस्मै विशः समंनमन्त पूर्वीरयमुग्रो विहव्यो यथासंत्। उपयामगृहीतोऽसीन्द्रांय त्वा विश्वकर्मण एष ते योनिरिन्द्रांय त्वा विश्वकर्मणे ।।४६।।**

**अन्वय :** (हे) विश्वकर्मन् हविषावर्द्धनेन त्रातारम् इन्द्रम् अवध्यम् अकृणोः (कृतवानसि) तस्मै पूर्वीविशः प्रजाः पूर्वे समनमन्त, यथा अयम् उग्रः विहव्यः असत् (तस्मैनमः)। हे ग्रह। उपयाम गृहीतः असि। विश्वकर्मणे इन्द्राय त्वा (गृह्णामि) एष ते योनिः, विश्वकर्मणे इन्द्राय त्वा (सादयामि)।

**व्याख्या :** हे संसार के सृष्टिकर्ता विश्वकर्मा! आप हवि के द्वारा परिपुष्ट करते हुए इन्द्र को जगत् का रक्षक और शत्रुओं से अवध्य बना दिया। उस इन्द्र को प्राचीन वसिष्ठादि ऋषियों ने भी नमन किया, जिसके कारण यह इन्द्र बड़ा तेजस्वी और विविध यज्ञों में आज भी आहूत होते हैं ऐसे आपको नमस्कार है। हे ग्रह! तुम उपयाम द्वारा गृहीत हो। सर्वकर्ता इन्द्रदेव के लिए तुम्हें ग्रहण करता हूँ हे ग्रह! यह तुम्हारा स्थान है। इन्द्र के लिए तुम्हें स्थापित करता हूँ।

**म० :** तृतीयो मन्त्रविकल्पः। इन्द्रविश्वकर्मदेवत्या त्रिष्टुप् शासदृष्टा। हे विश्वकर्मन्, वर्धमानेन वर्धयित्रा वा हविषा त्वमन्द्रिं त्रातारं जगतो रक्षकमवध्यं हन्तुमशक्यमप्रतिभटं चाकृणोः कृतवानसि। तस्मै तादृशायेन्द्राय

पूर्वाविशः प्रजाः पूर्वे। वसिष्टादयो मनुष्याः समनमन्त सम्यक्नताः। पञ्चम्यर्थे थाल्प्रत्ययः। यथा यतः कारणात् अयमिन्द्रः उग्र उद्गूर्णवज्रो विहव्यो विविधेषु कार्येषु आहूयत इति विहव्यश्च असदभूत्तस्माद्विशस्तस्मै नता इत्यर्थः। विश्वकर्मन्, त्वद्धविः- सामर्थ्यादिन्द्रस्यायं प्रभाव इति भावः। उपयाम एष ते इति व्याख्याते ॥46॥

### सप्तचत्वारिंशी

उपयामगृंहीतोऽस्यग्नयें त्वा गायत्रच्छंन्दसं गृह्णामीन्द्रांय त्वा त्रिष्टुप्छंन्दसं गृह्णामि विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णाम्यनुष्टुप्तेऽ- भिगरः ॥४७॥

**अन्वय** : (हे अदाभ्य सोम!) त्वम् उपयाम गृहीतः असि, गायत्रच्छन्दसं त्वाम् अग्नये गृह्णामि, त्रिष्टुपच्छन्दसं त्वा इन्द्राय गृह्णामि, जगच्छन्दसं त्वा विश्वेभ्यो देवेभ्यो गृह्णामि। अनुष्टुप् ते अभिगरः (अभिष्टवः)।

**व्याख्याः** हे सोम! तुम उपयामग्रहद्वारा गृहीत हो। हे ग्रह। गायत्रीछन्दवाले तुम्हें अग्नि की प्रसन्नता के लिए त्रिष्टुपछन्दवाले तुम्हें अग्नि की प्रसन्नता के लिए, त्रिष्टुपछन्दवाले तुम्हें इन्द्र की प्रसन्नता के लिए तथा जगतीछन्दवाले तुम्हें सभी देवों की प्रसन्नता के लिए ग्रहण करता हूँ। हे सोम! तुम्हारा प्रिय अनुष्टुप् छन्द है।

**म०** : 'अदाभ्यं गृह्णात्यासिच्य निग्राभ्या': पात्रे तस्मिंस्तूष्णीं त्रीनंशूनवधायाग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्रमुपयामः सर्वत्रविशेषादिति' (का. 12। 5। 13-15)। यस्मिन्नौदुम्बरे पात्रे अंशुर्गृहीतस्तस्मिन्होतृचमसस्था निग्राभ्यासंज्ञा अप आनीय तस्मिंस्तिस्रः सोमलताः प्रक्षिप्याग्नये त्वेत्यादित्रिभिर्मन्त्रैः क्रमेणादाभ्यं ग्रहं गृह्णाति। मन्त्रैः सोमलताप्रक्षेपो वेति केचित्। उपयामगृ- हीतोऽसीत्येतात्रिष्वपि मन्त्रेष्वादावनुषंजनीयं सर्वशेषत्वादाम्रानस्येति सूत्रार्थः। तत्र प्रथमो मन्त्रः। अदाभ्यदेवत्यानि त्रीणि यजूंषि देवदृष्टानि। हे सोम, त्वमुपयामेन, ग्रहेण गृहीतोऽसि हे ग्रह, गायत्री छन्दो यस्य ग्रहस्य तं गायत्रीच्छन्दसं त्वामग्नयेऽग्निप्रीत्यर्थ गृह्णामि। द्वितीयो मन्त्रः। उपयामेनं गृहीतोऽसि हे ग्रह, त्रिष्टुप् छन्दो यस्य ताहशं त्वामिन्द्राय गृह्णामि। तृतीयो मन्त्रः। उपयाम जगती छन्दो यस्य ताहशं त्वां हे ग्रह, विश्वेभ्यो देवेभ्योऽर्थाय

गृह्णामि। एवं सवनदेवताभ्यो वारत्रयं ग्रहणम्। 'अनुष्टुप्त इत्युक्त्वेति' (का. 12। 5। 17)। एवं मन्त्रं पठेत्। अदाभ्यदेवत्यं देवदृष्टम्। एवं स्वच्छन्दसं सोमं गृहीत्वाथ तमाह हे सोम, अनुष्ठप् छन्दस्ते तवाभिगरः अभिष्टुव इत्यर्थः। 'गृस्तुतौ' यद्वा 'ऊर्ध्वसवनेभ्यस्त- दानुष्टुभम्' (11। 5। 9। 7) इति श्रुतेः ।।47।।

## अष्टचत्वारिंशी

**व्रेशीनां त्वा पत्मन्नाधूनोमि कुकूननानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा पत्मन्नाधूनोमि मधुन्तमाना त्वा पत्मन्नाधूनोमि शुक्रं त्वां शुक्र आधूनोम्यह्नो रूपे सूर्य्यस्य रश्मिषु ।।४८।।**

**अन्वय** : हे सोम! व्रेशीनां पत्मन् त्वा आधूनोमि, ककूननानाम् पत्मन् त्वा आधूनोमि, भन्दनानाम् पत्मन् त्वा आधूनोमि, मन्दितानाम् पत्मन् त्वा आधूनोमि। हे सोम! शुक्रं त्वा शुक्रे जले आधूनोमि अह्नः रुपे सूर्यस्य रश्मिषु।

**व्याख्या** : हे सोम! मेघोदरस्थ जलों को बरसाने के लिए तुम्हें कम्पित (गतिमान) करता हूँ। गर्जनशील मेघोदरस्थ जल के लिए (वृष्टि के लिए) लोकानन्ददायक, तृप्तिदायक मधुरस्वादयुक्त शुद्ध तथा शुक्लवर्णवाले जल के निमित्त तुम्हें मैं प्रकम्पित करता हूँ। हे सोम! दिन के रुप में सूर्य की किरणों में तुम्हें मिलाता हूँ।

**म॰** : 'धूनोत्यशुंभिर्व्रेषीनां त्वेति गच्छन्नाहवनीयमिति' (का. 12। 5। 17)। आहवनीयसमीपं गच्छन्नंशुभिरदाभ्यग्रहस्थानि जलानि चालयेत्। एतदादीनि विश्वेषां देवानामित्यन्तानि सोमदेवत्यानि देवदृष्टानि। हे सोम, व्रेशीनां व्रजतो मेघस्योदरे शेरते ता व्रेश्यो मेघोदरस्था आपस्तासां पत्मन् पतने निमित्ते वृष्टिनिष्पत्त्यर्थं त्वा त्वमाधूनोमि कम्पयामि। कुकूननानाम्। 'कुङ् शब्दे' अत्यर्थ कुर्वन्त्यः शब्दं कुर्वाणा नमन्ति प्रह्वीभवन्तीति कुकूनना मेघस्था आपस्तासां पतने त्वां कम्पयामि। भन्दनानाम्। 'भदि कल्याणे वा मेध्या आपः अन्यत्पूर्ववत्। मदिन्तमानाम् मादयन्तीति मदिन्यः अत्यर्थं मदिन्यो मदिन्तमाः। तमापि पुंवद्भावः 'नलोपः प्रातिपदिकान्तस्य' (पा. 8। 1। 7) इति नलोपः 'नाद्धस्य' (पा. 8। 2। 17) इति छान्दयो नुडागमः।

अत्यन्तं तर्पयन्त्यो मेध्या आपः। मधुन्तमानाम् अत्यन्तं मधुस्वादोपेता मधुन्तमाः एवंविधानामपां पतने त्वां धूनोमि। किंच शुक्र शुद्धमकिल्ष्टकर्माणं त्वां शुक्रे शुद्धे अकिलष्टकर्मणि निग्राभ्या-लक्षणे जले त्वामाधूनोमि। किंच अह्नो दिवसस्य रूपे सूर्यस्य रष्मिषु हे सोम, त्वामाधूनोमि ।।48।।

## एकोनपञ्चाशी

**ककुभꣳ रूपं वृषभस्य रोचते बृहच्छुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाः। यत्ते सोमादाभ्यं नाम जागृवि तस्मै त्वा गृह्णामि तस्मै ते सोम सोमाय स्वाहा ।।४९।।**

**अन्वय :** हे सोम! वृषभस्य ककुभं रुपं रोचते, बृहत् शुक्रः शुक्रस्य शुद्धस्य तव पुरोगाः सोमः एव सोमस्य पुरोगाः। हे सोम! यत् ते अदाभ्यम् जागृविविनाम तस्मै त्वा गृह्णामि। तस्मै ते सोमाय। स्वाहा।

**व्याख्या :** हे सोम! अभीष्ट कामनाओं की वर्षा करने से वृषभ स्थानीय तुम्हारा श्रेष्ठरुप सभी को अच्छा लगता हैं, विराट्, शुक्ल प्रकाशवाले सूर्य भी सोम के पुरोगामी है क्योंकि सोम ही सोम का पुरोगामी हो सकता है। हे सोम! तुम्हारा नाम अविनाशी तथा जागरणशील है उसी के लिए मैं (तुम्हें ग्रहण करता हूँ। ऐसे सोम के लिए यह आहुति सुहुत हो।

**म० :** हे सोम, वृषभस्य श्रेष्ठतमस्य तव ककुभं महत् आदित्यलक्षणं रूपं रोचते दीप्यते। ककुभमिति महन्नामसु पठितम्। बृहत् महान् शुक्रः शुद्ध आदित्यः शुक्रस्य शुद्धस्य सोमस्य तव पुरोगाः पुरोगामी। सोम एव सोमस्य पुरोगाः पुरोगामी भवितुमर्हति। हे सोम, ते त्वदीयमदाभ्यमनुपहिंसितं जागृवि जागरणशीलं यन्नामास्ति तस्मै त्वां गृह्णामि। 'तस्मै त इति जुहोतीति' (का. 12। 5। 17) अदाभ्यं जुहोति। सौम्यम् हे सोम, तस्मै तादृशाय ते तुभ्यं स्वाहा सुहुतमस्तु। 'तस्सोममेवैतत्सोमाय जुहोति' (11। 5। 9। 11) इति श्रुतेः ।।49।।

## पञ्चाशी

**उशिक्त्वं दैव सोमाग्नेः प्रियं पाथोऽपीहि वशी त्वं दैव सोमेन्द्रस्य प्रियं पाथोऽपीह्यस्मत्सखा त्वं दैव सोम विश्वैषां देवानां प्रियं पाथोऽपीहि ।।५०।।**

**अन्वय :** (हे) देव सोम! त्वम् उशिक्, कामयमानः अग्नेः प्रियं पाथः अपीहि अपिगच्छ। (हे) देवसोम! त्वं वशी, इन्द्रस्य प्रियं पाथः अपीहि (प्राप्नुहि)। (हे) सोम! त्वम् अस्मत् सखा, अतः विश्वेषां देवानां प्रियं पाथः अपीहि (प्राप्नुहि)।

**व्याख्या:** हे दिव्यतेज सम्पन्न सोम! तुम सभी (देवों) के प्रिय हो जिसमें अग्नि के अत्यन्तप्रिय अन्नरुप हो। हे सोम! तुम कान्तिमान हो। अतः इन्द्र के प्रिय अन्नरुप को प्राप्त करो! अर्थात् तुम इन्द्र के अत्यन्त प्रिय भोज्य बनो)। तुम हमारे मित्र हो। अतः तुम सभी देवों के प्रिय भोज्य बनो। अर्थात् सभी देव रुचिपूर्वक तुम्हें ग्रहण करें।

**म० :** 'अंशून्सोमे निदधात्युशिक्त्वमिति प्रतिमन्त्रमिति' (का. 12। 5। 18) मन्त्रत्रयेणोलूखस्थानंशून्सोमे क्षिपेत्। तत्राद्यः। हे देव, दीप्यमान हे सोम, उशिक् कायममानस्त्वमग्रेः प्रियं पाथोऽन्नमपीहि अपिगच्छ। द्वितीयः। हे देव सोम, वशी कान्तस्त्वमिन्द्रस्य प्रियमन्नं प्राप्नुहि। अथ तृतीयो मन्त्रः। हे देव सोम, अस्मत्सखा अस्माकं मित्रभूतस्त्वं विश्वेषां देवानां प्रियमभिरुचितमन्नं प्राप्नुहि 'अग्निर्वै प्रातः सवनमिन्द्रो माध्यन्दिनं सवन विश्वेदेवास्तृतीय सवनम्' इति श्रुतेः सवनदेवेभ्योऽर्पणम् ॥50॥

## एकपञ्चाशी

**इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा। उपसृजन्धरुणं मात्रे धरुणो मातरं धयन्। रायस्पोषमस्मासु दीधरत्स्वाहा ॥५१॥**

**अन्वय :** (हे गावः) इह रतिः, इह एवयूयं रमध्वम्। इह धृति इह स्वधृतिः स्वाहा। धरुणः अग्नि मात्रे मातुः धरुणम् उपसृजन् मातरं ध यन् (हविर्भक्षयन्) अस्मासु रायःपोषं दीधरत् (धारयतु) स्वाहा।

**व्याख्या :** हे गोओ! इस यजमान के घर से तुम्हारा प्रेम हो, यहीं तुम लोग रमण करो, धैर्यपूर्वक तथा सन्तोष के साथ यहीं रहो। इसके निमित्त यह हवि सुहुत हो। सभी पदार्थों के धारकअग्नि, मातापृथिवी के लिए धारण शक्ति प्रदान करें। इससे उत्पन्न हवि का आस्वादन करते हुए हम लोगों को धन ऐश्वर्य आदि से समृद्ध करें। यह आहुति अग्नि के लिए सुहुत हो।

**म० :** अथ सत्रोत्थानमन्त्रा देवदृष्टाः। 'शालाद्वार्येऽन्वारब्धेष्विह

रतिरिति जुहोतीति' (का. 12। 4। 10)। सर्वेषु दीक्षितेष्वध्वर्युस्पृष्टेष्विदानींतन-गार्हपत्ये घृतं जुहुयात्। पशुदैवतं यजुः। हे गावः, युष्मदीया रतिः रमणमिह यजमानेष्वस्तु। इहैव यूयं रमध्वम्। युष्माकमिह यजमानेषु धृतिः संतोषोऽस्तु स्वधृतिः स्वकीयानामपि धृतिरिहैवास्तु। स्वाहा सुहुतमस्तु। 'अपरामुपसृजन्निति' (का. 12। 4। 11) शालाद्वार्ये एव द्वितीयाहुतिः उष्णिक् आद्यावष्टाक्षरौ तृतीयो द्वादशार्णः सोष्णिक्। धारयतीति धरुणोऽग्निरस्मासु रायस्पोषं रायो धनस्य पशुपुत्रसुवर्णादेः पुष्टिं दीधरत् धारयतु। धारयतेर्लुङि रूपम्। अड्भाव आर्षः। किंभूतो धरुणः। मात्रे धरुणम्। षष्ठ्यर्थे चतुर्थी। मातुः पृथिव्या धारयितारमग्निमुपसृजन् समीपं प्रापयन् तथा मातरं पृथिवी धयन्पिबन्। तत्रोत्पन्नं हविर्भक्षयन्नित्यर्थः। स्वाहेति होमार्थः ।।51।।

### द्विपञ्चाशी

**सत्रस्यऽऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम। दिवं पृथिव्या अध्यारुहामाविदाम देवान्स्वर्ज्योतिः ।।५२।।**

**अन्वय :** (हे साम!) त्वं सत्रस्य, ऋद्धिः असि ज्योतिः अगन्म (प्राप्ताः)। अमृताः अभूम। पृथिव्या दिवम् अध्यारुहाम, देवान् अविदाम, ज्योतिः स्वः च (अविदाम)।

**व्याख्या :** हे साम! तुम याग की समृद्धि हो। तुम्हारी कृपा से हमने प्रकाश (आदित्यरुपज्योति) को प्राप्त किया और हम अमर हो गये। पृथिवी से स्वर्ग में आरुढ हो गये। इसके बाद देवताओं को प्राप्त किया तथा अब ज्योति स्वरुप ब्रह्म को भी प्राप्त कर लिया।

यहाँ सत्रर्द्धि र्द्धिसाम का गान दीक्षितों के द्वारा होता है।

**म॰ :** 'सत्रस्यर्द्धिगायन्ति सत्रस्य ऋद्धिरिति' (का. 12। 4। 12)। सर्वे दीक्षिता उत्तरहविर्धानापरकूबरीमालम्ब्य सत्रर्द्धिसंज्ञकं साम गायन्ति। बृहती यजमानानामात्मस्तुतिः सप्तैकादशनवार्णपादा। हे साम, सत्रस्य ऋद्धिः समृद्धिः त्वमसि, अतो वयं यजमाना ज्योतिरादित्यलक्षणमगन्म प्राप्ताः। ततः अमृता अमरणधर्माणः अभूम भूताः। पृथिव्याः सकाशाद्दिवं द्युलोकमध्यारुहाम। अध्यारूढाः द्युलोकारूढाः ततो देवानिन्द्रादीनविदाम जानीमः पश्याम इत्यर्थः। वेत्तेर्व्यत्ययेन तुदादित्वे लङि रूपम्। ज्योतिर्ज्योतीरूपं स्वः स्वर्गं चाविदाम ।।52।।

## त्रिपञ्चाशी

**युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तन्तमिद्धतम्। दूरे चत्तायच्छन्त्सद्गहनं यदिनक्षत्। अस्माकꣳशत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः। भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ।।५३।।**

**अन्वय :** हे इन्द्र पर्वता! युवम् (युवां) पुरोयुधौ, यो नः पृतन्याद् तम् इत अपहतम् (विनाशयतम्) वज्रेण तं तम् इत हतम्। हे इन्द्र! ते वज्र यद् गहनम् इनक्षन् (प्रान्नुयात) दूरे चत्ताय (गताय) छन्सत्! (हे) शूर अस्माकं विश्वतः शत्रून् दर्मा विश्वतः परिदर्षीष्ट (विदारयतु)। भूः भुवः स्वः प्रजाभिः वीरैः सुवीराः पोषैः सुपोषः स्याम (भवेम)

**व्याख्या :** हे इन्द्र और पर्वत देवों! तुम दोनों शत्रुओं के सामने उत्साहपूर्वक युद्ध करने वाले हो। जो हमसे युद्ध करता है या युद्ध की इच्दा करता है उसे अपने बज्र से नष्ट कर दो। जो शत्रु अतिदूर है, उसे भी आप वज्र से नष्ट कर दो। हे शूर। हमारे सभी शत्रुओं को आपका विदारणशील यह वज्र विदीर्ण कर डाले। हे अग्निवायुसूर्य। आपके अनुग्रह से हम, प्रजाओं में उत्तम प्रजायुक्त वीर पुत्रों से सुपुत्रवान, तथा धनैश्वर्यादि से समृद्ध बनें।

**म० :** 'युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निष्क्रामन्तीति' (का. 12। 4। 14)। सर्वे यजमाना दक्षिणहविर्धानाक्षार्धोमार्गेण प्राङ्मुखाः निःसरन्ति। इन्द्रदेवत्यास्यष्टिरवसानत्रयोपेता षट्षष्ठ्यक्षरत्वात् घूना आद्योऽर्थर्च इन्द्रपर्वतदेवत्यः। हे पुरोयुधा पुरोयुधौ पुरोऽग्रे युध्येते तौ पुरोयुधौ 'इगुपध-' (पा. 3। 1। 135) इति कप्रत्ययः। शत्रूणां पुरतो युद्धस्य कर्तारौ हे इन्द्रापर्वता इन्द्रपर्वतौ, युवं युवां तं शत्रुमपहतं विनाशयतम्। आदरे वीप्सा तं तम्। इदेवार्थे। तं तमेव शत्रुमपहतं तत्तत्समानमेव सर्वमपि शत्रुं विनाशयतम्। तत्रापि विशेष्यते। वज्रेण वज्राख्येनायुधेन तं तमित् तं तमेव शत्रुं विनाशयतम्। तदो वीप्साश्रवजाद्यदोऽपि वीप्सा। यो यः शत्रुर्नोऽस्मान्पृतन्यात् पृतनां सेनां कुर्यात्। योधयेदित्यर्थः। इदानीमिन्द्रः प्रत्यक्षो वज्रस्य कर्तृत्वं चोच्यते। हे शूर इन्द्र, त्वदीयो वज्रो यद्यदा गहनमत्यन्तमगम्भीरं वनं जलं वा प्रति दूरे चत्ताय। चतातिर्गतिकर्मा। वनेऽतिदूरगताय शत्रवे छन्त्सत्। छन्दसिः कामनार्थः। शत्रुं प्राप्तुं कामयते तदा तमपि दूरगतमिनक्षन्प्राप्नुयात्। इनक्षतिर्व्याप्तिकर्मा।

वने दूरगतमपि इच्छन् गृह्वात्येवेत्यर्थः। ततो दर्मा दारयतीति दर्मा 'दृ विदारणे' अन्येभ्योऽपि दृश्यन्ते' (पा. 3। 2। 75) इति मनिन्प्रत्ययः। विदारणशीलो वज्रः अस्माकमस्मदीयान् विश्वतः सर्वतः स्थितान् विश्वतः सर्वान्शत्रून् परिदर्षीष्ट परितो विदारयतु। दीर्यतेराशीलिङि तडि रूपम्। 'पृथकामेषु यजमानेषु सर्वे वाग्विसर्जनं कुर्युः। हे भूर्भुवःस्वः अग्निवायुसूर्याः, वयं प्रजाभिः सुप्रजाः स्याम वीरैः पुत्रैः सुवीराः स्याम। पोषैः पुष्टिभिः सुपोषाः स्याम भवेम। एकवचनान्तोऽयं व्याख्यातः। अत्र तु बहुवचनान्तो मन्त्रः ॥53॥

### चतुःपञ्चाशी

**पर॒मे॒ष्ठ्य॒भिधी॑तः प्र॒जाप॑तिर्वा॒चि व्याहृ॑ताया॒मन्धो॒ऽअच्छे॑तः। सवि॒ता स॒न्यां वि॒श्वक॑र्मा दी॒क्षायां॑ पू॒षा सौ॑म॒क्रय॑ण्याम् ॥५४॥**

**अन्वय** : यजमानेन अभिधीतः (संकल्पितः) सोमः परमेष्ठी भवति वाचि व्याहृतायां प्रजापतिः भवति, अच्छः इतः अन्धो भवति सन्यां सविता, दीक्षायाम् विश्वकर्मा, सोमक्रयण्याम् पूषा (भवति सोमः)।

**व्याख्या** : यजमान द्वारा मनसे संकल्पित (सोमयज्ञ करुँगा) होने पर सोम परमेष्ठी बन जाता हैं। इसी प्रकार वाणी से नाम लिए जाने पर प्रजापति, सामने आने पर अन्धः यथाभागरक्षित होने पर सविता, यजमान के दीक्षाग्रहण करने पर विश्वकर्मा तथा सोमक्रयणी गौ के लाने पर सोम पूषा संज्ञक हो जाता है।

**म०** : 'परमेष्ठ्यादींश्चतुस्त्रिंशतं जुहोति धर्मदुग्ध्वाले चादोहे चोदीच्या दोहस्थानेऽन्यस्याः शालाय वा पुरस्तात्प्राच्याः पुच्छः काण्डादक्षिणेऽस्थनि हुत्वा दोहयेत् पृषदाज्यस्कन्दने चैक इति' (का. 25। 6। 1-6)। मृण्मयघर्मपात्रभेदे भिन्नमभिमृश्य परमेष्ठिने स्वाहा प्रजापतये स्वाहेत्यादीन्स-लिलाय स्वाहेत्यन्तां चतुस्त्रिंशद्धोमान्जुहोति। घर्मदुहो गोर्मरणे तत्स्थाने उदङमुख्या स्थितायाः पत्नीशालापूर्वभागे प्राङमुख्या वा पुच्छा दक्षिणेऽस्थनि परमेष्ठिने स्वाहेति चतुस्त्रिंशतमाज्याहुतीर्हुत्वा तां दोहयेत्। स्थालीस्थस्य स्तुक्स्थस्य वा पृषदाज्यस्य वा भ्रंशे एके आचार्यः परमेष्ठवादीञ्जुह्वतीति सूत्रार्थः। परमेष्ठ्यादयो देवा यज्ञस्य शरीराणि तस्मात्ततदवस्थायां होमे यज्ञश्चिकित्सितः प्रतिसंदितो भवति। तथाच श्रुतिः 'सोमो वै राजा यज्ञः प्रजापतिस्तस्यैतास्तन्वो य एता देवता य एता आहुतीर्जुहोति स यद्यज्ञस्याच्छेंद्यां तत्प्रति देवतां

मन्येत तामनुसमीक्ष्य जुहयाद्यदि दीक्षोपमत्स्वाहवनीये यदि प्रसुत आग्नीध विवा एतद्यज्ञस्य पर्व स्त्रंसते यद्धलति या यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञं भिषज्यति तया देवतया यज्ञं प्रतिसन्दधातीति' (12। 5। 1। 1-2)। अथ मन्त्रार्थः। आध्यायाद्वसिष्ठ ऋषिः। यदा सोमो यजमानेनाभिधीतः संकल्पितो भवति। मनसाभिध्यातस्तदा परमेष्ठी भवति। अयमर्थः। मनसा ध्यातः सोमो यदि नोपनमेत् तदा परमेष्ठिने स्वाहेति जुहुयादिति। तथाच श्रुतिः 'स यद्येनं मनसाभिध्यातो यज्ञो नोपनमेत् परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्यपाप्मानंहत उपेनं यज्ञो नमतीति' (12। 5 1 3)। वाचि व्याहृतया सोमेन यक्ष्ये इति वचस्युच्चारिते सति सोमः प्रजापतिनामको भवति तदा प्रायश्चित्तापत्तौ प्रजापतये स्वाहेति जुहुयादित्यर्थः। यदा सोमः अच्छाभिमुख्येन इतः। प्राप्तस्तदा अन्धो भवति। सोमं प्रति गतौ किंचिन्निमित्तं चेत्तदा अन्धसे स्वाहेति जुहुयात्। सन्यां सोमस्य संभक्तौ सत्यां सोमः सवितृनामको भवति तदा प्रायश्चित्तापदौ सवित्रे खाहेति जुहुयात्' (12। 5। 1। 6) इति श्रुतेः। दीक्षायां सत्यां सोमो विश्वकर्मत्युच्यते तदा विश्वकर्मणे स्वाहेति जुहुयात्। सोमः क्रीयतेऽनया सा सोमक्रयणी गौस्तस्यामानीतायां सत्यां सोमः पूषा भवति। तदा निमित्ते पूष्णे स्वाहेति जुहुयात् ।।54।।

## पञ्चपञ्चाशी

**इन्द्रंश्च मुरुतंश्च क्रुयायोपोत्थितोऽसुरः पुण्यमांनो मित्रः क्रीतो विष्णुंः शिपिविष्टऽऊरावासंन्नो विष्णुंर्नरन्धिंषः ।।५५।।**

**अन्वय :** इन्द्रश्च मरुतश्च क्रयाय उपोत्थितः पण्यमान असुरः क्रीतः मित्रः उरौ असन्नः शिपिविष्ट, विष्णुः प्रोह्यमाणः नरन्धिषः विष्णुः।

**व्याख्या :** द्रव्य द्वारा क्रयण के समय सोम, इन्द्र तथा मरुत नाम वाला होता है। उसी प्रकार जब उसका सौदा हो जाता है तब असुर (क्रीत) खरीद लेने पर मित्र, यजमान के गोद में रखें जाने पर शिपिशिष्टविष्णु तथा शकट से ले जाने के समय नरन्धिषविष्णु संज्ञक हो जाता है।

**म॰ :** क्रयाय द्रव्यादानेनात्मसात्करणायोपोत्थितः उपस्थापितः सोम इन्द्रामरुन्नामकश्च भवति तदा इन्द्राय मरुद्भ्यश्च स्वाहेति जुहुयात्।

क्रीयमाणः सोमोऽसुरो भवति असुराय स्वाहेति तदा जुहुयात्। यजमानेन क्रीतः सोमो मित्रो भवति तदा मित्राय स्वाहेति जुहुयात्। ऊरौ यजमानोत्संगे आसन्नः स्थितः सोमः शिपिविष्टो विष्णुरित्यर्थः। तदा प्रायश्चित्तापत्तौ विष्णवे शिपिविष्टाय स्वाहेति जुहुयात्। प्रोह्यमाणः शकटेनोह्यमानः सोमो विष्णुर्नरन्धिषो भवति नरो धीयन्ते आरोप्यन्ते यस्मिन् स नरन्धिः संसारः तं स्यति नाशयति नरन्धिषः जगत्संहतृविशिष्टो विष्णुः। यद्वा 'रथ हिंसायाम्' रध्यति हिनस्ति रन्धिषः हन्ता न रन्धिषः नरन्धिषः संसारः तं स्यति नाशयति नरन्धिषः जगत्संहर्तृविशिष्टो विष्णुः। यद्वा 'रध हिंसायाम्' रध्यति हिनस्ति रन्धिषः हन्ता न रन्धिषः नरन्धिषः जगत्पालको वा विष्णुः। तदा विष्णवे नरन्धिषाय स्वाहेति जुहुयात् ।।55।।

### षट्पञ्चाशी

**प्रोह्यमाणः सोमऽआगतो व्वरुण आसन्द्यामासन्नोऽग्निराग्नीध्रऽ इन्द्रो हविर्धानेऽथर्वोपावह्रियमाणः ।।५६।।**

**अन्वय** : प्रोह्यमाणः आगत्: सोमः आसन्द्याम् आसन्नः वरुणः आग्नीध्रे, अग्निः हविर्धाने इन्द्रः, उपावह्रियमाणः अथर्वा नामको भवति।

**व्याख्या** : यह सोम शकट से उतारते समय (यज्ञस्थल पर) सोम नाम से कहलाता है, चौकी के ऊपर (आसन्दी पर रखे जाने पर वरुणनाम वाला हो जाता है। इसी प्रकार आग्नीध्र के पास यह सोम अग्निसंज्ञक हो जाता है। हविर्धान में रहने वाला इन्द्रसंज्ञक तथा कूटने के लिए प्रस्तुत सोम अथर्वा कहलाता है। इस प्रकार तत्तत्प्रसंगों में यथानाम होम करना चाहिए।

**म॰** : शकटादागतोऽरूढः सोमनामको भवति तदा सोमाय स्वाहेति जुहुयात्। आसन्द्यां मञ्चिकायामुपविष्टः सोमो वरुणो भवति तदा वरुणाय स्वाहेति जुहुयात्। आग्नीध्रे वर्तमानः सोमोऽग्निर्भवति तदाग्नये स्वाहेति जुहुयात्। हविर्धाने वर्तमानः सोम इन्द्रो भवति तदेन्द्राय स्वाहेति जुहुयात्। 'हृदे त्वा मनसे त्वे' (अ. 7 क. 19) ति मन्त्रेण कण्डनार्थमुपावह्रियमाणः आनीयमानः सोमोऽथर्वनामको भवति तदाथर्वणे स्वाहेति जुहुयात् ।।56।।

### सप्तपञ्चाशी

**विश्वेदेवाऽअंशुषु न्युप्तो विष्णुराप्रीतपा आप्याय्यमानो**

**यमः सूयमानो विष्णुः संभ्रियमाणो वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः ।।५७।।**

**अन्वय :** अयं सोमः अंशुषु न्युप्तः विश्वेदेवाः, नामको भवति। आप्यायमानः आप्रीतपा विष्णुः, सूयमानो यमः, सम्भ्रियमाणो विष्णुः पूयमानः वायुः, पूतः, शुक्रः, क्षीर श्रीः शुक्रः, सक्तुश्रीः मन्थी (भवति)।

**व्याख्या :** छोटे-छोटे टुकड़ों में विभक्तकर के रखा गया सोम विश्वेदेव संज्ञक होता है। वृद्धि को प्राप्त हुआ सोम सर्वविधरक्षक विष्णु के समान होता है। अभिषवन किये जाने पर यम तथा सम्यक पुष्यमाण (दशापवित्र) द्वारा छाने जाने पर वायु, छानने के बाद धवल वर्ण होने से शुक्र संज्ञक हो जाता है। दूध से मिश्रित सोम, शुक्र ही होता है तथा सत्तु से मिश्रित होने पर वही सोम मन्थी कहलता है। अतः यथा प्रसंग इन नामों से होम करना चाहिए।

**म० :** अंशुषु सोमखण्डेषु न्युप्तः कण्डनं कृत्वारोपितः सोमो विश्वदेवनामको भवति तदा विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयात्। 'अंꣳशुरꣳशुष्ट' (अ. 5। क. 7) इत्यादिमन्त्रेण आप्याय्यमानः वर्धमानः सोम आप्रीतपा विष्णुर्भवति। आ समन्तात्प्रीतान्स्वस्मिन्प्रीतिमतो भक्तान्पाति रक्षतीत्याप्रीतपाः सद्गुणविशिष्टः। तदा विष्णवे आप्रीतपाय स्वाहेति जुहुयात्। अभिषूयमाणः सोमो यमो भवति तदा यमाय स्वाहेति जुहुयात्। सम्यग्भ्रियमाणः पुष्यमाणः सोमो विष्णुर्भवति तदा विष्णवे स्वाहेति जुहुयात्। दशापवित्रेण पूयमानः सोमो वायुर्भवति तदा वायवे स्वाहेति जुहुयात्। पूतः सोमः शुक्रो भवति तदा शुक्राय स्वाहेति जुहुयात्। क्षीरेण दुग्धेन श्रीयते मिश्रीक्रियत इति क्षीरश्रीः तदा शुक्र एव सोमो भवति तदापि शुक्राय स्वाहेति जुहुयात्। सक्तुभिर्मिश्रितः सोमो मन्थी भवति तदा मन्थिने स्वाहेति जुहुयात् ।।57।।

**अष्टपञ्चाशी**

**विश्वेदेवाश्चमसेषून्नीतोऽसुर्होमायोद्यतो रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः प्रतिख्यातो भक्षो भक्ष्यमाणः पितरो नाराशꣳसाः ।।५८।।**

**अन्वय :** चमसेषु ग्रहपात्रेषु उन्नीतः (सोमः) विश्वेदेवाः विश्वदेवा संज्ञको भवति। होमाय उद्यतः असुः, हूयमानो रूद्रः, अभ्यावृत्तो वातः,

प्रतिख्यातो नृचक्षाः भक्ष्यमाणो भक्षः सन्नो नाराशंसाः पितरो भवति।

**व्याख्या** : ग्रहपात्रों में रखा गया सोम विश्वेदेवसंज्ञक होता है। इसी प्रकार आहुति के लिए तैयार किया गया असु (संज्ञक), आहुति में प्रदत्त (सोम) रुद्र, हुतशेषसोम (सदोमण्डप में लाये जाने पर) वातः भक्षण के लिए पूछा गयासोम नृचक्षा, पीये जाने पर भक्ष, तथा अपने खर में स्थापितसोम नाराशंसयज्ञगुण विशिंष्ट पितर (संज्ञक) होता है।

**म०** : चमसेषु ग्रहपात्रैषुन्नीतो गृहीतः सोमो विश्वदेवसंज्ञो भवति तदा विश्वेभ्योदेवेभ्यः स्वाहेति जुहुयात्। होमार्थमुद्यतः सोमोऽसुसंज्ञो भवति तदा असवे स्वाहेति जुहुयात्। हूयमानः सोमो रुद्रो भवति तदा रुद्राय स्वाहेति जुहुयात्। हूयमानः सोमो रुद्रो भवति तदा रुद्राय स्वाहेति जुहुयात्। अभ्यावृत्तः होमशेषीभूतः सदः प्रति भक्षणार्थमानीतः सोमोवातो भवति तदा वाताय स्वाहेति जुहुयात्। प्रतिख्यातः ब्रह्मन्नुपह्वयस्वेत्यादिना भक्षणार्थ पृष्टः सोमो नृचक्षा भवति नृन् मनुष्यान् चष्टे शुभाशुभकारेण पश्यतीति नृचक्षाः तदा नृचक्षसे स्वाहेति जुहुयात्। भक्ष्यमाणः पीयमानः सोमो भक्षो भवति तदा भक्षाय स्वाहेति जुहुयात्। भक्षयित्वा सन्नः स्वखरेषु सादितः सोमो नाराशंसाः पितरो भवन्ति नरो अस्मिन्नासीनाः शंसन्तीति नराशंसो यज्ञस्तत्र हिता योग्या वा नाराशंसा नाराशंसगुणविशिष्टाः पितराः तदा निमित्तापत्तौ पितृभ्यो नाराशंसेभ्यः स्वाहेति जुहुयात् ।।58।।

## एकोनषष्टी

**सु॒न्नःसिन्धु॑रवभृ॒थायोद्य॑तः समु॒द्रो॒ऽभ्यवह्रि॒यमा॑णः सलि॒लः प्रप्लु॑तो॒ य॒योरोज॑सा स्कभि॒ता रजा॑ꣳसि वी॒र्ये॒भिर्वी॒रत॑मा॒ शवि॑ष्ठा। या पत्ये॑ते॒ऽअप्र॑तीता॒ सहो॑भि॒र्विष्णू॑ऽअग॒न्वरु॑णा पू॒र्वहू॑तौ ।।५९।।**

**अन्वय** : अवभृथाय उद्यतः सोमः सिन्धुः भवति अभ्यवह्रियंमाणः समुद्रः प्रप्लुतो भवति सलिलः ययोः ओजसा, रजांसि स्कभिता या वीर्येभिः वीरतमा शविष्ठा सहोभिः अप्रतीता पत्येते पूर्वहूतौ विष्णू वरुणौ प्रतिस्कन्नं हविः अगन् (अगच्छत)।

**व्याख्या** : अवभृथस्नानादि के लिए उद्यत तैयार सोम सिन्धुसंज्ञक जल के सामने नीयमान सोम समुद्रसंज्ञक तथा जल में निमग्न सोम सलिलसंज्ञक अर्थात् जलरुप हो जाता है। [इस प्रकार यहाँ तक सोम के उपनाममन्त्रों से आहुति प्रदान कर सोमयाग पूर्ण किया जाता है। इसे

यज्ञचिकित्सा भी कहते हैं।] जिन विष्णु एवं वरुण के तेज से (बल से) पृथिवी आदि लोक स्थित है, तथा जो विष्णु एवं वरुण अपने पराक्रम से जगत के ईश्वर है। ये दोनों अत्यन्तवीर तथा युद्ध में पीठ न दिखाने वाले ऐसे विष्णु एवं वरुण के लिए यह हवि दी जाती है।

**म० :** अवभृथार्थमुद्यत: सोम: सिन्धुर्भवति तदा सिन्धवे स्वाहेति जुहुयात्। जलमभिमुखं नीयमान: सोम: समुद्रो भवति तदा समुद्राय स्वाहेति जुहुयात्। प्रक्षिप्तोऽप्सु निमग्न: सोम: सलिलो भवति तदा प्रायश्चित्तापत्तौ सलिलाय स्वाहेति जुहुयात्। एताभिर्यज्ञाहुतिमिर्यज्ञ: चिकित्सित: प्रतिसंहितश्च भवतीत्यर्थ:। तथाच श्रुति: 'ता वा एताश्चतुस्त्रिंशतमाज्याहुती-र्जुहोति त्रयस्त्रिंशद्वै देवा: प्रजापतिश्चतुस्त्रिंस एतदु सैर्देवैयज्ञं भिषज्यति सवैर्देवैयंज्ञं प्रतिसंदधातीति' (12। 5। 1। 37)। 'ययोरोजसेति चोदकेनोप-सिञ्चेदित' (का. 35। 2। 9)। अभिमर्शनेन विकल्प:। स्कन्नं रसरूपं सोमं जलेन सिञ्चेत् कालाहुतिहोमं वाचनं च कृत्वेति ज्ञेयम्। विष्णुवरुणदेवत्या त्रिष्टुप्। पूर्वोर्धे यच्छन्दोपादाना- त्तच्छब्दाध्याहार:। तौ विष्णु तौ वरुणौ। एकत्र विष्णुशब्दस्यैकशेषोऽन्यत्र वरुणशब्दस्य तुल्यकार्यत्वादुभावपि विष्णू उभावपि वरुणौ कर्मभूतौ प्रति अगन् गतं एकन्नं यज्ञसाधनमिति शेष:। कदा पूर्वहूतौ पूर्वस्मिन्नाह्वाने यावत्प्रधानं हूयते तावदेव विष्णुं वरुणं च प्रति स्कन्नं हविर्गतमित्यर्थ:। विशेषणं वा। पूर्व। हूयेते तौ पूर्वहूतौ विष्णुवरुणौ प्रति हविरगन्निति संबन्ध:। तौ कौ तयोर्विष्णुवरुणयोरोजसा वलेन रजांसि लोका: स्कंभिता स्तम्भितानि। 'लोका रजांस्युच्यन्ते' (नि. 4। 19) इति यास्क:। स्कभ्नोति: स्तम्भनार्थ:। किंच या यौ विष्णुवरुणौ पत्येते ईशाते ऐश्वर्य कुर्वाते जगतामीश्वरावित्यर्थ:। 'पत ऐश्वर्ये' दिवादिरात्मनेपदी। यद्धा पत्येते परसैन्येषु श्येनाविव पतत:। किंभूतौ। वीर्येभिर्वीर्यैबलैवीरतमा अत्यन्तं वीरौ। तथा शविष्ठा। शव इति बलनाम। अत्यन्तं बलवन्तौ अतिशवस्विनौ शविष्ठौ 'विन्मतोर्लुक्' (पा. 5। 3। 65) इति विनिलोपे इष्ठानि टिलोपे शविष्टाविति रूपम्। तथा सहोर्भिबैलैरप्रतीता अप्रतिगतौ न केनापि संमुखं गन्तुं शक्यौ अनन्ययोध्यादित्यर्थ:। न प्रतीयेते तावप्रतीतौ। एवंविधौ विष्णुवरुणौ प्रतिस्कन्नं हविर्गतमित्यर्थ: ।।59।।

**षष्टी**

**दे॒वान्दिवं॑मगन्य॒ज्ञस्तत॑तो॒ मा॒ द्रवि॑णमष्टु मनु॒ष्या॒न॒न्तरि॑क्षमग-**

**न्यज्ञस्ततो॑ मा द्रवि॑णमष्टु पि॒तॄन्पृ॑थि॒वीम॑गन्य॒ज्ञस्ततो॑ मा॒ द्रवि॑णमष्टु यं कं च॑ लो॒कम॑ग॑न्य॒ज्ञस्ततो॑ मे भ॒द्रम॑भूत् ।।६०।।**

**अन्वय :** देवान् (प्राप्य) यज्ञः दिवम् अगन् (अगच्छत्) ततो मा द्रविणम् अष्टु (व्याप्नोतु) यज्ञः मनुष्यान् अन्तरिक्षम् अगन्, ततो मा द्रविणम् अष्टु, यज्ञः पितृन पृथिवीम् अगन्, ततो मा द्रविणम अष्टु। यं कं च लोकं यज्ञः अगन् ततो में भद्रम अभूत्।

**व्याख्या :** यह यज्ञ वायुआदिदेवों को प्राप्तकर द्युलोक में व्याप्त है। वहॉ से यज्ञफलरुपधन हमें प्रदान करे। इसके पश्चात यज्ञ मनुष्य लोक एवं अन्तरिक्षलोक में जाकर, वहाँ से हमें वर्षा के रुप में यज्ञफल प्रदान करें। यह यज्ञ पितरों को प्राप्त कर भूलोक में गया है। वहाँ से हमें यज्ञफलस्वरूपधन प्रदान करें। इस प्रकार इनके अलावा जिस किसी भी लोक में यह यज्ञ गया है वहाँ से हमारा कल्याण सम्पादन हो।

**म० :** 'देवान् दिवमिति सोमे' (का. 25। 2। 8)। सोमे स्कन्ने देवान् दिवमित्यभिमर्शनम्। अत्यष्ठिर्यज्ञदेवत्या यजमानाशीः। अयं यज्ञो देवान्वायवादीन्प्राप्य दिवं द्युलोकमगन् अगच्छत्। ततो द्युलोकस्थाद् यज्ञात् द्रविणं विशिष्टभोगसाधनरूपं धनं यज्ञफलभूतं मा मामष्टु व्याप्रोतु। अश्नोतेः पदविकरणयोर्व्यत्ययः। अनेन सुकृतिनामारोहक्रममभिधायेदानी- मवरोहक्रममाह। ततो द्युलोकांदवरोहणकांले यज्ञो मनुष्यात् मनुष्यलोकमागच्छन् अन्तरिक्षलोकमगन् गतः। तत्र स्थितात् यज्ञाद् द्रविणं यज्ञफलं मामष्टु व्याप्रोतु। दक्षिणायने गमनागमनमाह। अयं यज्ञो धूमादिमार्गेण पितृन्प्राप्य पृथिवीं भूलोक्मगन् तत्र स्थिताद्यज्ञाद्रविणं मामष्टु व्याप्रोतु। किं बहुना। यं कंच यं कमपि लोकं यज्ञोऽमन् गतस्तस्माद् यज्ञात् मे मम भद्रं कल्याणमभूद्भूयादिति यजमानेनाशास्यते ।।60।।

### एकषष्टी

**चतु॑स्त्रि॒ꣳश॒त्तन्त॑वो॒ ये व्वि॑तत्नि॒रे य इ॒मं य॒ज्ञꣳ स्व॒धया॑ दद॑न्ते। तेषां॑ छि॒न्नꣳ सम्वे॒तद्द॑धामि॒ स्वाहा॑ घ॒र्मोऽअप्ये॑तु दे॒वान् ।।६१।।**

**अन्वय :** चतुस्त्रिंशत् ये तन्तवः इमं यज्ञं वितत्निरे ये इमं यज्ञ स्वधया ददन्ते (धारयन्ति) तेषां देवानां छिन्नं एतद उ सन्दधामि, घर्मः महावीर देवान् अप्येतु (देवान् प्रतिगच्छतु)।

**व्याख्या** : प्रजापति (परमेष्ठी) आदि जो चौतीस देवता है, उन्होंने इस यज्ञ का विस्तार किया तथा इस यज्ञ को अपनी स्वधा (धारण शक्ति या अन्नपोषण सामर्थ्य) से धारण किया हैं। उन देवों का जो अंश छिन्न हो गया है उस अंश को इस हविप्रदान द्वारा पुनः पुष्ट करता हूँ। महावीरपात्रस्थितसोम देवताओं को प्राप्त हो।

**म०** : 'घर्मदेवत्या पंक्तिस्त्रिष्टुप् वा द्वाचत्वारिंशदक्षरत्वात्। कात्यायनेनास्य विनियोगो नोक्तः। महावीरभेदे घृतहोमः शाखान्तरे। तन्वन्ति प्रायश्चित्तशमनेन यज्ञं विस्तारयन्तीति तन्तवो देवाश्चतुस्त्रिंशत्संख्याका ये परमेष्ठ्यादयः इमं यज्ञं वितेनिरे वितेनिरे वितन्वन्ति। तनोर्तेर्लिटि तङि प्रथमबहुचने 'लिटि धातोरनभ्यासस्य' (पा. 6। 1। 8) इति द्वित्वे 'तलिपत्योश्छन्दसि' (पा. 6। 4। 99) इत्युपधालोपे तत्निरे इति रूपम्। ये चेमं स्वधयान्नेन ददन्ते धारयन्ति 'दद दानधारणयोः' तेषां यज्ञं वितन्वतां देवानां यत् छिन्नं तदेतत् अहं संदधामि। उकारः पादपूरणः। स्वाहा सुहुतमस्तु। अनेन घृतहोमेन महावीरः संहितो भवित्वत्यर्थः। घर्मो महावीरः सविता सन्देवानप्येतु देवान्प्रति गच्छतु ।।61।।

### द्विषष्टी

**य॒ज्ञस्य॒ दोहो॒ व्वित॑तः पुरु॒त्रा सो अ॒ष्ट॒धा दिव॑म॒न्वात॑तान। स य॑ज्ञ धुक्ष्व॒ महि॑ मे प्र॒जायाᳬं॑रा॒यस्पोषं॑ विश्व॒मायु॑रशीय॒ स्वाहा॑ ।।६२।।**

**अन्वय** : यज्ञस्य दोहः पुरुत्रा विततः स अष्टधा दिवम् अनु आततान। स यज्ञः मे प्रजायां धुक्ष्व, अहि रायस्पोषं विश्वम् आयुः अशीय स्वाहा।

**व्याख्या** : यज्ञाहुति का श्रेष्ठफल बहुधा विस्तृत होकर आठों दिशाओं में विभक्तहोकर स्वर्गपर्यन्त फैल जाता है। ऐसे हे यज्ञ! मेरी प्रजा को (पुत्रादि) महिमामण्डित करो। तुम्हारे अनुग्रह से मैं धनादि से समृद्ध होकर पूर्णआयु को प्राप्त करूँ।

**म०** : 'सोमेज्योपपाते चैकैकां यथाकालंहुत्वा यज्ञस्य दोह इति वाचयतीति' (का. 25। 6। 7)। सोमयागे यज्ञांगविनाशे परमेष्ठ्यादिचतुस्त्रिंश-दाहुतीनां मध्ये यथाकालम् 'अथ यदि पण्यमाने' (12। 5। 1। 10) इत्यादिश्रुत्युक्ते काले एकैकामाहुतिं हुत्वा यजमानं वाचयेत्। यज्ञदेवत्या

त्रिष्टुप्। पूर्वार्थः परोक्षो द्वितीयः प्रत्यक्षोऽतो यच्छन्दाध्याहारेण योजना। हे यज्ञ, स त्वं म `मम प्रजायां सन्ततौ महि महिमानं धुक्ष्व क्षर देहीत्यर्थः। यद्वा महि महान्तं पूवोक्तं दोहं धुक्ष्व। अहं च त्वप्रसादाद्रायो धनस्य पोषं पुष्टिं विश्वं सर्वमायुश्चाशीय व्याप्नुयाम्। स कः। यस्य यज्ञस्य यजनीयस्य तव दोह आहुतिपरिणामः स प्रसिद्धो यज्ञफलरूपः पुरुत्र बहुधा विततः प्रसृतः सन् दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वाततान व्याप। भूमिमन्तरिक्षं च व्याप्य स्वर्ग व्यापेत्यर्थः। ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामो यज्ञपरिणाम इति भावः ॥62॥

### त्रिषष्टी

**आपवस्व हिरण्यवदश्ववत्सोम वीरवत्। वाजं गोमन्तमाभर स्वाहा ॥६३॥**

**अन्वय :** (हे) सोम त्वम् आ पावस्य (आगच्छ) हिरण्यवद् अश्ववत् वीरवत्। हे सोम, गोमन्तं वाजम् आभर। (आहर)।

**व्याख्या :** हे सोम! तुम मेरे पास आओ और हमें स्वर्ण अश्व वीर पुत्रादि प्रदान करते हुए धेनु आदि से भी हमें समृद्ध करो।

**म॰ :** 'आपवस्व हिरण्यवदित्युद्गातृहोमो ध्वाक्षारोहणे यूपस्येति' (का. 25। 6। 9)। पशौ सोमे च यूपस्य काकारोहणे उद्गात्र होमः कार्यः। सोमदेवत्या गायत्री कृश्यपद्रष्टा। हे सोम, त्वमापवस्व आगच्छ। तत्र क्रियाविशेषणानि। कपंहिरण्यवत्कनकयुक्तमृववदयुक्तं वीरवद् वीरयुक्तं यथा तथा याहीत्यर्थः। स्वर्णाश्ववीरान्मह्यं देहीत्यर्थः। किंच हे सोम, गोमन्तं धेनुयुक्तं वाजमन्नमाभर आहर। अन्नं धेनूंश्च देहीत्यर्थः। स्वाहा सुहुतमस्तु। 'हृग्रहोर्भश्छन्दसि' (पा. 8। 2। 32) इति भकारः ॥63॥ प्रायश्चित्तानि समाप्तानि।

श्रीमन्महीधरकृते वेददीपे मनोहरे।
ग्रहग्रहान्निमित्तान्तोऽष्टमोऽध्यायः समीरितः ॥8॥

### इत्यष्टमोऽध्यायः

इस प्रकार चतुर्थ अध्याय से अष्टम अध्याय तक (5 अध्यायों में अग्निष्टोम याग का वर्णन है। इसके बाद प्रस्तुत नवें अध्याय के प्रारम्भ से 34 कण्डिका पर्यन्त वाजपेययाग का तथा आगे राजसूय याग का वर्णन किया जायेगा।

# श्रीः

# अथ नवमोऽध्यायः

### तत्र प्रथमा

**देवं सवितः प्रसुंव यज्ञं प्रसुंव यज्ञपंतिं भगांय। दिव्यो गंन्धर्वः कैतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु स्वाहां ।।१।।**

**अन्वय :** (हे) देव सवितः! प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः नः केतं (अन्नं) पुनातु। वाचस्पतिः नः वाजं स्वदतु।

**व्याख्याः** हे सभी के प्रेरक (सर्वान्तर्यामी) सविता देव! आप इस वाजपेय याग को सम्पन्न करें। तथा यजमान को भी इस याग (वाजपेय) को करने के लिए प्रेरित करें जो ऐश्वर्यदायक है। आपकी कृपा से द्युलोक रश्मियों के धारक सूर्यमण्डलरुप देव हमारे अन्न को पवित्र करें। प्रजापति देव हमारे इस यज्ञ के हविर्लक्षणरुप अन्न को रूचिपूर्वक ग्रहण करें।

**म०:** 'चतुर्थाध्यामारभ्याष्टमान्तमध्यायपञ्चके अग्निष्टोममन्त्रास्तदीय-प्रासंगिका मन्त्राश्चोक्ताः। नवमेऽध्याये वाजपेयमन्त्रा उच्यन्ते चतुस्त्रिंशत्कण्डि-कापर्यन्तम्। तेषां बृहस्पतीन्द्रावृषी। तत्र 'देव सवितरिति जुहोति यजत्यादिष्विति' (का. 14। 1। 11)। वाजपेयांगभूतानां यजतीनां दीक्षणीयाप्रापणीयादीनामादिष्षु सकृद्गृहीतमाज्यं जुहोति। सवितृदेवत्या त्रिष्टुप्। हे सवितः सर्वस्य प्रेरकान्तर्यामिन्, हे देव दीप्यमान, यज्ञं वाजपेयलक्षणं यागं प्रसुव प्रवर्तक प्रेरकान्तर्यामिन्, हे देव दीप्यमान, यज्ञं वाजपेयलक्षणं यागं प्रसुव अभ्यनुजानीहि प्रवर्तयेत्यर्थः। यज्ञपति यजमानं भगाय भजनीयायानुष्ठानरूपायैश्वर्याय प्रसुव प्रेरय। एवं मण्डलाधिष्ठातारं पुरुषमुक्त्वेदानीं मण्डलं प्रत्याह। त्वत्प्रसादाद्दिवि भवो दिव्यो गन्धर्वो गवां रश्मीनां धारयिता केतपूः केतशब्देनान्नमुच्यते। केतमन्नं पुनातीति केतपूः। अन्नस्य पावयिता सूर्यमण्डलरूपो देवो नोऽस्माकं केतमन्नं पुनातु शोधयतु। किंच त्वत्प्रसादाद्वाचस्पतिः प्रजापतिर्नोऽस्मांकं वाजमन्नं हविर्लक्षणं स्वदतु आस्वादयतु स्वाहा सुहुतमस्तु ।।1।।

## द्वितीया

**ध्रुवसदंन्त्वा नृषदंम्मनःसदंमुपयामगृंहीतोऽसीन्द्रांय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्रांय त्वा जुष्टंतमम् ।। अप्सुषदंन्त्वा घृतसदंम्व्योमसदंमुपयामगृंहीतोऽसीन्द्रांय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्रांय त्वा जुष्टंतमम् ।। पृथिविसदं त्वान्तरिक्षसदंनदिविसदंन्देवसदंन्नाकसदंमुपयामगृंहीतोऽसीन्द्रांय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्रांय त्वा जुष्टंतमम् ।।२।।**

**अन्वय :** (हे सोम!) त्वम् ध्रुवसदं नृषदं मनःसदं त्वा इन्द्राय जुष्टं गृह्णामि। हे ग्रह एष ते योनिः इन्द्राय जुष्टतमं त्वा गृह्णामि। अप्सुषदं घृतसदं व्योमसदं त्वा इन्द्राय जुष्टं गृह्णामि। एष ते योनिः इन्द्राय जुष्टतमं त्वा गृह्णामि। पृथिवीसदम् अन्तरिक्षसदं दिविसदं देवसदं नाकसदं त्वा इन्द्राय जुष्टं गृह्णामि। एष ते योनिः इन्द्राय जुष्टतमं त्वा (गृह्णामि)।

**व्याख्या :** हे सोम! तुम उपयामग्रह पात्र द्वारा गृहीत हो। तुम स्थिर लोक में रहने वाले हो। मनुष्यों में तथा उनके मन में सदा निवास करने वाले, इन्द्र के अत्यन्त प्रिय हो (ऐसे) तुम्हें यहाँ स्थापित करता हूँ। हे सोम उदक, (जल में) घृत तथा व्योम (आकाश) में तुम रहने वाले हो, इन्द्रदेव के अत्यन्त प्रिय तुम्हें मैं ग्रहण करता हूँ। हे सोम! तुम उपयाम ग्रह द्वारा गृहीत हो। तुम पृथिवी, अन्तरिक्ष तथा स्वर्ग में रहनेवाले हो। हे ग्रह यह तुम्हारा स्थान है। इन्द्र के परम प्रिय तुम्हे यहां स्थापित करता हूँ।

**म० :** 'प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं पञ्च चैन्द्रान्ध्रुवसदमिति प्रतिमन्त्रमिति' (का. 14। 1। 261)। प्रातःसवन आग्रयणानन्तरं त्रीनतिग्राह्यानादाय षोडशिनं चादाय पञ्चेन्द्रदेवत्यान्ग्रहान्गृह्णीयात्। त्रीणि यजूंषीन्द्रदेवत्यानि। हे सोम, त्वम् उपयामतीत्युपयामो ग्रहस्तेन गृहीतोऽसि। इन्द्राय जुष्टं प्रियं त्वा त्वां गृह्णामि। किंभूतं त्वाम्। धुवसदं ध्रुवे स्थिरेऽस्मिन् लोके सीदतीति ध्रुवसत्तम नृष मनुष्येण सीदतीनि नृषत मनसि सीदतीति मनःसत्तम। सोमाहुतिपरिणामभूतो रस एषु लोकेष्वावर्तमानः सोमाध्यस्त उच्यते। सादयति हे ग्रह, एष खरप्रदेशस्तव स्थानम्। इन्द्राय प्रियतमं त्वां

सादयामीति शेषः। अथ द्वितीयम्। अप्सुषदमुदकसदं घृते सीदतीति व्योम्नि अन्तरिक्षे सीदतीति। शेषो व्याख्यातः। अथ तृतीयम्। पृथिव्यामन्तरिक्षे दिवि स्वर्गे देवेषु नास्ति अकं दुःखं यस्मिन् तस्मिनाके सुखान्विते स्वर्गविशेषे सीदतीति तादृशम्। शेषमृजु ।।2।।

## तृतीया

**अपाꣳरसमुद्वयसꣳसूर्ये सन्तꣳसमाहितम्। अपाꣳरसस्य यो रसस्तं व्वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।।३।।**

**अन्वय :** (हे सोम!) सूर्ये सन्तं समाहितम् उद्वयसम् अपां रसं (गृह्णामि)। अपां रसस्य यो रसः तं उत्तमं वः गृह्णामि। हे सोम! त्वम् उपयाम गृहीतः असि। इन्द्राय जुष्टं त्वां गृह्णामि। एंष ते योनिः, इन्द्राय जुष्टतमं त्वां गृह्णामि।

**व्याख्या :** हे सोम! सूर्यमण्डल में विद्यमान रहने वाले अन्नों के उत्पादक जल के सारभाग वायु का ग्रहण करता हूँ। है देवो! जल के कारणभूत वायु का भी जो साररस प्रजापति! (हिरण्यगर्भ, रुप) है, उसको तुम्हारे लिए गहण करता हूँ जो अतिश्रेष्ठ है। हे सोम! तुम उपयाम (ग्रह) पात्र में गृहीत हों! इन्द्र के प्रियं तुम्हें ग्रहण कर रहा हूँ। हे ग्रह! यह तुम्हारा स्थान है। इन्द्र के अत्यन्त प्रिय तुम्हें मैं यहाँ स्थापित करता हूँ।

यहाँ सोम के रूप में वायु तथा इसके अधिपति प्रजापति का ग्रहण किया गया है।

**म० :** अथ चतुर्थम्। रसदेवत्यानुष्टप् सूर्ये समाहितं समारोपितं स्थापितं सन्तमपामुदकानां रसं सारं वायुमहं गृह्णामि। 'एष वा अपांरसो योऽयं पवते' (5। 1। 1। 6) इति श्रुतेः। किंभूतं रसम्। उद्वयसमुद्गतं वयोऽन्नं यस्माद्वायोः स उद्वयास्तम्। वायुनैव धान्यानि निष्पद्यन्ते। किंच अपां रसस्य वायोर्यो रसः सारः प्रजापतिर्हिरण्यगर्भः स हि यज्ञलोककलाग्नि वायुसूर्यग्यर्ग्जुःसामादिवपुः हे देवाः, वो युष्मदर्थ तं प्रजापतिं अहं गृह्णामि। किंभूतम्। उत्तममुत्कृष्टमम्। वः शब्दोऽनर्थको वा। सोमरूपेण वायुं तदभिमानिनं प्रजापतिं च गृह्णामीत्यर्थः। उपयामेति व्याख्यातम्। एष त इति सादनम् ।।3।।

### चतुर्थी

**ग्रहांऽऊर्जाहुतयो व्यन्तो विप्राय मतिम्। तेषां विशिप्रियाणां व्वोऽहमिषमूर्जं समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्। संपृचौ स्थः सम्मा भद्रेण पृङ्क्तं विपृचौ स्थो व्विमा पाप्मना पृङ्क्तम् ।।४।।**

**अन्वय :** (हे) ग्रहा, ऊर्ज्जाहुतयः विप्राय मतिं व्यन्तः तेषां विशिप्रियाणि वः इषम् ऊर्ज्जं समग्रभम्। (सम्यक् गृह्णामि)। हे सोम! उपयाम गृहीतोसि इन्द्राय जुष्टं त्वा (गृह्णामि)। हे (सोमसुराग्रहौ युवां) सम्पृचौ स्थः, मा भद्रेण सम्पृक्तं विपृक्तौ स्थः मा पाप्मना पृङ्क्तम्।

**व्याख्या :** हे ग्रहों। तुम अन्न एवं बल प्रदान करने वाले हो। मेधावी (विप्र) याचक को शुभबुद्धि प्रदान करने वाले ऐसे प्रजाओं के प्रिय आप लोगों के लिए बलप्रद दिव्यपेय (सोमरस) का ग्रहण करता हूँ। हे सोम! तुम उपयामग्रह पात्र में गृहीत हो। इन्द्र की प्रसन्नता के लिए तुम्हें ग्रहण करता हूँ। यह तुम्हारा उद्भव स्थान है। इन्द्र के अत्यन्त प्रिय तुम्हें यहाँ स्थापित करता हूँ। हे सोम एंव सुराग्रह तुम दोनों आपस में मिले हुए हो। अतः मेरा कल्याण सम्पादन करो। हे ग्रहों आप दोनों गुणों से परस्पर अलग होने के कारण मुझे भी पाप से दूर करो।

**म० :** अथ पञ्चमम्। ग्रहदेवत्यानुष्टुप्। हे ग्रहाः, तेषां वो युष्माकं संबन्धिनमिषंमन्नमूर्जं रसं चाहं समग्रभं सम्यग्गृह्णामि। किंभूतानां। विशिप्रियाणाम्। शिप्रे हनू नासिके वा। इह तु हनू। शिप्रयोर्हन्वोः कर्म शिप्रियं हनुचलनम्। विगतं शिप्रियं येषुग्रहेषु ते विशिप्रियाः सम्यगभिषुताः सुपूताश्च। तत्रा हि हन्वोर्व्यापारो नास्ति सुपेयत्वात्। तेषां केषां। ये यूय मूर्जाहुतयः ऊर्जमन्नरसमाह्वयन्ति ये यैर्वा ते ऊर्जाहुतयः। तथा विप्राय मेधाविने इन्द्राय मतिं विशिष्टबुद्धिं व्यन्तः जानन्तो गमयन्तो वा। वीत्यस्य गतिकर्मणो धातौः शतृप्रत्यये रूपम्। उपयाम एष ते इति व्याख्याते (का. 14। 2। 7) उपर्युपर्यक्षमध्वर्युधीरयत्यधोऽधो नेष्टाः संपृचाविति। अध्वर्युः सोमग्रहमक्षोपरि धारयति नेष्टा पुराग्रहमक्षाधस्तात्। सहैव धारणं मन्त्रापाठश्च। ग्रहदेवते यजुषी। हे सोमसुराग्रहौ, यौ युवां संपृचौ स्थः संपृक्तौ भवथः। 'पृची संपर्के' किप्। तौ युवां मा मां भद्रेण भन्दनीयेन कल्याणेन संपृक्कत

संसृजतं संयोजयतम्। 'विपृचावित्याहरते' (का. 14। 2। 8) इति। अध्वर्युनेष्टारौ स्वं स्वं ग्रहं स्वसमीपमानयतः। हे ग्रहौ, यतो युवां विपृचौ वियुक्तौ स्थः ततो मा मां पाप्मना विपृङ्क्तं वियोजयतम् ।।4।।

**पञ्चमी**

**इन्द्र॑स्य॒ वज्रो॑ऽसि वा॒ज॒सास्त्वया॒यं वाज॑ꣳसेत्। वाज॑स्य॒ नु प्र॑स॒वे मा॒तरं॑ म॒हीमदि॑तिं॒ नाम॒ वच॑सा करामहे। यस्या॑मि॒दं विश्वं॒ भुव॑नमावि॒वेश॒ तस्या॑न्नो दे॒वः स॑वि॒ता धर्मं॑ साविषत् ।।५।।**

**अन्वय :** (हे रथ! त्वम् इन्द्रस्य वज्रोंसि, वाजसाः अयं यजमानः वाजं सेत् (अन्नवान् भूयात्)। वाजस्य नु प्रसवे मातरं महीम् अदितिं वचसा करामहे। यस्याम् इदं विश्वं भुवनम् आविवेश तस्यां नः सविता देवः धर्म साविषत्।

**व्याख्या :** हे रथ! तुमं इन्द्र के वज्र हो, लोक को अन्न प्रदान करने वाले हो अतः तुम्हारे अनुग्रह से यह (यजमान) अन्न तथा जल से सम्पन्न हो। अन्तोत्पादन के लिए हम जगत की निर्मात्री (माता) महनीया (पूज्या) अदिति (पृथिवी) को अपनी वैदिक स्तुति से अनुकूल करते हैं। जिस पृथिवी पर यह समस्त भुवनमण्डल आश्रय ग्रहण करता है। उस पर हमें, सवितादेवता (सर्वप्रेरक देव) स्थिर रहने की बुद्धि प्रदान करें।

**म॰ :** 'मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणमिति' (का. 14। 3। 1)। महामरुत्वतीयान्ते माहेन्द्रात्पूर्वं रथवाहनाच्छकटाद्रथमवतारयति। रथदेवत्यं यजुः। हे रथ, त्वमिन्द्रस्य वज्रोऽसि। इन्द्रेण यदा वृत्राय वज्रं प्रहृतं तत्त्रिधा जातं तस्यैको भागो रथ इति 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारः' (1। 2। 4। 1) इत्यादिश्रुत्या उक्तम्। किंभूतस्त्वम्। वाजसाः वाजमन्नं सनोति ददातीति वाजसाः। 'षणु दाने' विट्प्रत्ययः 'विडनोरनुनासिकस्यात्–' (पा. 6।4।41) इत्याकारः। किंच अयं यजमानस्त्वया वज्रीभूतेन सहायेन वाजमन्नं सेत्। सनोतेः सिनोतेर्वा रूपम्। अन्नं सिनुयात्संभजेत। यद्वा सिनुयाद्बध्नीयात्। वह्वन्नवान्भूयादित्यर्थः। 'चात्वालमावर्तयति वाजस्येति धूर्गृहीतामिति' (का. 14।3।2)। अवतारितं रथं धुरि गृहीत्वा चात्वालाद्दक्षिणेनानीय वेद्यां स्थापयेत्। पृथिवीदेवत्यातिजगती अन्त्यः पादः सवितृदेवत्यः। नु एवार्थे। वाजस्यान्नस्य प्रसवेऽनुज्ञायामेव वर्तमान वयं यां भूमिं नाम

प्रसिद्धं यथा तथा वचसा वेदवाक्येन एवंविधामनुकूलां करामहे कृतवन्तः कुर्महे वा। करोतेः शपि रूपम्। किंभूतां भूमिम्। मातरं जगन्निर्मात्रीं महीं महतीं महनीयां वा अदितिमदीनामखण्डितां वा। किंच इदं विश्वं भुवनं सर्व भूतजातं यस्यां भूमावाविवेश आविष्टम्। सविता देवस्तस्यां भूमावेव नोऽस्माकं धर्म धाारणमवस्थानं साविषत् प्रसुवतां प्रेरयतु। 'षू प्रेरणे' इति धातोर्णिजन्तस्य लेटि साविषदिति रूपम् 'सिब्बहुलं लेटि' (पा. 3। 1। 34) 'लेटोऽडाटौ' (पा. 3। 4। 94) 'इतश्च लोपः परस्मैपदेषु' (पा. 3। 4। 97) इति सूत्रैः ।।5।।

### षष्ठी

**अप्स्वन्तरमृतमप्सु भैषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः। देवीरापो यो वऽऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजंꣳसेत् ।।६।।**

**अन्वय** : अप्सु अन्तः अमृतम् अप्सु भेषजम्। (हे) अश्वाः! उत अपां प्रशस्तिषु वाजिनो भवत। हे देवीः देव्यः आपः वः य ऊर्म्मिः प्रतूर्तिः ककुन्मान् वाजसा तेन अयं वाजं सेत्।

**व्याख्या** : जल के अन्दर अमृत है तथा इसी में सर्वरोगनाशिनी औषधियाँ है। हे अश्वों! जल की प्रशंसनीयशक्तियों से मिलकर तुम बेगवान बनों। हे दिव्यजल! तुम्हारी ये चञ्चललहरें प्रकृष्टवेगवाली ककुद के समान उत्तुंग (ऊपर उठने वाली)तथा अन्न प्रदान करने वाली है। इससे सिक्त (सिचिंत) यह अश्व वेगवान हो।

यहाँ अश्वों का जल से प्रोक्षण हो रहा है।

**म०** : 'अश्वान् प्रोक्षत्यपोऽवनीयमानान् स्नातान्वागतानप्स्वन्तरिति देवीराप इति वा समुच्चयो वेति' (का. 14। 3। 3। 5) स्नानार्थमपो नीयमानान् स्नात्वागतान्वाश्वानप्स्वन्तरिति देवीराप इति मन्त्रेण वोभाभ्यां वा प्रोक्षेत्। अश्वदेवत्या अव सानरहिता पुरउष्णिक्। अस्याः पाद आद्यो द्वादशाक्षरो द्वावष्टाक्षरौ। अप्सु उदकेषु अन्तर्मध्ये अमृतमवस्थितमप्सु भेषजमारोग्यपुष्टिकरमौषधं चावस्थितम्। हे अश्वाः, यूयं तत्रामृतभेषजयुतास्वप्सु वाजिनोऽन्नवन्तो भवत। उतापि च अपां प्रशस्तिषु प्रशस्तेषु भागेषु यूयं भवत। द्वितीयः प्रोक्षणमन्त्रः अब्देवत्यं यजुः। हे देवीः देव्यो दीप्यमाना

आपः, वो युष्माकं य ऊर्मिः कल्लोलस्तेन सिक्तोऽयमश्वो वाजमन्नं सेत् सनुयाद् वध्नीयाद्वा। किंभूत ऊर्मिः। प्रतूर्तिः प्रकृष्टा तूतिर्वेगो यस्य प्रत्वरणाशीलः। तथा ककुन्मान् ककुच्छब्देन वृषभस्कन्धो उन्नतप्रदेश उच्यते। सादृश्ये मतुप्। तत्सामान्यादुदकनिचयैः संयुक्तौ बहुलोदकसंघातवान्ककुन्मानित्युच्यते। तथा वाजसाः अन्नस्य दाता ॥6॥

## सप्तमी

**वातो॑ वा॒ मनो॑ वा गन्ध॒र्वाः स॒प्तवि॑ꣳशतिः। ते अऽग्रेऽश्वं॑मयुञ्जँ॒स्तेऽअ॑स्मिञ्ज॒वमाद॑धुः ॥७॥**

**अन्वय :** वातो वा, मनो वा सप्तविंशति गन्धर्वा ते अग्रे अश्वम् अयुञ्जन्। ते अस्मिन् जवम् आदधुः (स्थापितवन्तः)।

**व्याख्या :** वायु, मन एवं सत्ताईसनक्षत्र ये ही भूमि को धारण करने वाले हैं। इन्होंने ही पहले अश्व को रथ में नियोजित किया तथा इनमें वेग (शीघ्रगति) को स्थापित किया।

**म० :** 'दक्षिणं युनक्ति वातो वेति' (का. 14। 3। 6)। दक्षिणमश्वं रथे योजयेत्। अश्वदेवत्या उष्णिक्। वाशब्दौ समुच्चयार्थौ। वातो वायुर्मन इन्द्रियं सप्तविंशतिर्नक्षत्रणि गन्धर्वा गोर्भूमेर्धार्तारः ते वातादयोऽग्रे पूर्वमश्वमयुञ्जन् रथे योजितवन्तः। ते च वातादयोऽस्मिन्नश्वे जवं वेगमादधुः स्थापितवन्तः ॥7॥

## अष्टमी

**वात॑रꣳहा भव वाजिन्यु॒ज्यमा॑न॒ऽइन्द्र॑स्येव॒ दक्षि॑णः श्रि॒यैधि॑। यु॒ञ्जन्तु॑ त्वा म॒रुतो॑ वि॒श्ववे॑दस॒ऽआ ते॒ त्वष्टा॑ प॒त्सु ज॒वं द॑धातु ॥८॥**

**अन्वय :** हे वाजिन! अश्व! युज्यमानः सन् (रथे) वातरंहा वायुवेगवद् भव तथा, च इन्द्रस्य दक्षिणः (दक्षिणेभागे) अश्व इव श्रिया एधि। युञ्जन्तु त्वा मरुतः, विश्ववेदसः, त्वष्टा देव ते पत्सु (पादेषु) जवम् वेगम् आदधातु। (स्थापयतु)।

**व्याख्या :** हे अश्व! तुम इस रथ में जुड़ने के बाद (युज्यमान होकर) मरुत के समान (आँधी के समान) वेगवाले हो जाओ तथा इन्द्र

के दक्षिणभाग में स्थित होकर इन्द्र के अश्व के समान सुशोभित हो। मरुद्गण तुम्हें रथ में नियोजित करें। सर्वज्ञ त्वष्टादेवता तुम्हारे पैरों में वेग (द्रुतगति) को स्थापित करे। अर्थात् तुम्हें गतिमान करें।

**म॰ :** 'उत्तरं वातरंहा इति (का. 14। 3। 7)। उत्तरमश्वं युनक्ति। अश्वदेवत्या त्रिष्टुप्। हे वाजिन् वेगवन्नश्व, युज्यमानः सन् त्वं वातरंहा वातवद्वेगयुक्तो भव वातस्येव रंहो यस्य। किंच दक्षिणो दक्षिणभागे स्थितस्त्वमिन्द्रस्याश्व इव श्रिया शोभया युक्त एधि भव। किंच विश्ववेदसः सर्वज्ञाः सर्वधना वा मरुतः हे अश्व, त्वां युजन्तु रथे नियोजयन्तु। किंच त्वष्टा देवः हे अश्व, ते तव पत्सु पादेषु जवं वेगमादधातु स्थापयतु ।।8।।

**नवमी**

**ज॒वो यस्तै॑ व्वाजि॒न्निहि॑तो॒ गुहा॒ यः श्ये॒ने परी॑त्तो॒ अच॑रच्च॒ वातै॑। तेन॑ नो वाजि॒न्बल॑वा॒न्बलै॑न व्वाज॒जिच्च॒ भव॒ सम॑ने च पारयि॒ष्णुः ।। वाजि॑नो वाजजि॒तो वाज॑ सरि॒ष्यन्तो॒ बृह॒स्पतै॑र्भा॒गमव॑जिघ्रत ।।९।।**

**अन्वय :** हे अश्व! यस्ते जवः गुहानिहितः यश्च श्येने परीतः अचरत् (प्रवर्तते वाते) (हे वाजिन्) तेन बलेन वलवान् नः वाजजित् भव। च समने पारयिष्णुः वाजिनो वाजजितः सरिष्यन्तः बृहस्पतेः भागम् अवजिघ्रत।

**व्याख्या :** हे अश्व! तुम्हारा जो वेग (शक्ति) हृदय में छिपा है, जो वेग (गति) वाज नामक पक्षी में है, तथा जो संचरणशील वायु में है, इस त्रिविध बलों से बलवान होकर हमारे लिए अन्न के जेता तथा संग्राम में संकट से पार लगाने वाले बनो। हे वेगवानअश्वों अन्न के प्रति जाते हुए तुम बृहस्पति के चरुभाग का आघ्राण करो (सूँघो)।

**म॰ :** 'दक्षिणाप्रष्टिं जवो यस्त इति' (का. 14। 3। 8)। दक्षिणायां धुरि प्रकृष्टं देशमश्नुत इति दक्षिणाप्रष्टिस्तादृशं तृतीयमश्वं युनक्ति। अश्वदेवत्या जगती हे वाजिन्नश्व, यस्ते तव जवो वेगः गुहा गुहायां हृदयप्रदेशे निहितोऽवस्थापितः। 'सुपां सुलुक्' (पा. 7। 1। 39) इति गुहाशब्दात् ङेर्लुक् श्येने श्येनाख्ये पक्षिणि यो जवः परीत्तः त्वयैव परिदत्तः सन् अचरत् चरति प्रवर्तते। यश्च ते जवः परिदत्तः सन् वाते अचरत् वायौ चरति। परिपूर्वाद्ददातेर्निष्ठायां 'अच उपसर्गात्तः' (पा. 7। 4।

47) इति तादेशे 'दस्ति' (पा. 6। 3। 124) इति दादेशे तकारे परे इगन्तोपसर्गस्य दीर्घे परीत्त इति। हे वाजिन्, तेन त्रिविधेन बलेन वेगलक्षणेन बलवान्वेगवान्सन्नेऽस्माकं वाजजित् अन्नस्य जेता भव। च पुनः समरे संग्रामे पारयिष्णुः पारयिता च पारप्रापको भव। 'पार तीर कर्मसमाप्तौ' इत्यस्माचुरादिणिजन्तात् 'णेश्छन्दसि' (पा. 3। 2। 137) इतीष्णुप्रत्ययः। 'बार्हस्पत्यमेनानाघ्रापयति वाजिन इति' (का. 14। 3। 10)। बार्हस्पत्यं चरुमश्वानाघ्रापयेत्। अश्वदेवत्यं यजुः। वाजजितोऽन्नस्य जेतारो वाजमन्नं प्रति सरिष्यन्तो गमिष्यन्तो हे वाजिनोऽश्वाः, यूयं बृहस्पतेर्भागं चरुमवजिघ्रत आघ्राणं कुरुत ।।9।।

## दशमी

**दे॒वस्या॒हᳪं स॑वि॒तुः स॒वे स॒त्यसं॑वसो॒ बृह॒स्पतें॒रु॒त्त॒मन्ना॑कᳪं- रुहेयम्। दे॒वस्या॒हᳪं स॑वि॒तुः स॒वे स॒त्यसं॑वस॒ऽइन्द्रं॑स्योत्त॒मं ना॑कᳪं रुहेयम्। दे॒वस्या॒हᳪं स॑वि॒तुः स॒वे स॒त्यप्रसं॑वसो॒ बृह॒स्पतें॒रु॒त्त॒मं ना॑कमरुहम्। दे॒वस्या॒हᳪं स॑वि॒तुः स॒वे स॒त्यप्रं॑सवस॒ऽइन्द्रं॑स्योत्त॒मं ना॑कमरुहम् ।।१०।।**

**अन्वय :** सत्यसवसः सवितु र्देवस्य सवे अहं बृहस्पतेः उत्तमं नाकं रुहेयम्। देवस्य सवे अहम् इन्द्रस्य उत्तमं नाकं रुहेयम्। बृहस्पतेः उत्तमं नाकम् अरुहम् इन्द्रस्य उत्तमं नाकम् अरुहम्।

**व्याख्या :** सर्वप्रेरक सविताः देवता की प्रेरणा से मैं, बृहस्पति के (उत्कृष्टस्वर्ग) में आरोहण करता हूँ। इसी प्रकार इन्द्र के उत्तमलोक (स्वर्ग) में आरोहण करता हूँ। मैंने इस यज्ञ के प्रभाव से बृहस्पति के श्रेष्ठ स्वर्गलोक में आरोहण किया है। इसी प्रकार सविता देवता की प्रेरणा से इन्द्रदेव के श्रेष्ठ स्वर्ग में मैंने आरोहण किया है।

**म० :** 'देवस्याहमिति ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितमिति' (का. 14। 3। 12)। उत्करप्रदेशे निखातस्य नाभिमात्रकाष्ठस्याग्रे स्थितं रथचक्रं ब्रह्मारोहेत् ब्राह्मणकर्तृके वाजपेये लिंगोक्तदेवतम्। सत्यसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सर्वेऽनुज्ञायां वर्तमानोऽहं बृहस्पतेः सबन्धिनमुक्त- मृत्कृष्टं नाकं रुहेयमारोहामि। क्षत्रियवाजपेये चक्रारोहमन्त्रः। तत्र इन्द्रस्य नाकं रुहेयमिति विशेषः। 'आगतेषु ब्रह्मावरोहति देवस्याहमिति' (का. 14। 4। 8)। यजमानादीनां सप्तदशरथेषु सप्तदशशरप्रक्षेपप्रदेशे निखाता मौदुम्बरीं

शाखां प्रदक्षिणीकृत्य देवयजनदेशमागतेषु सत्सुब्रह्मा रथचक्रादवरोहति। विप्रयज्ञे पूर्वमन्त्रेण क्षात्रे उत्तरेण। सत्यं प्रकृष्टं च सवो यस्येति सत्यप्रसवाः। अत्र प्रशब्दः प्रकर्षद्योतकः। अरुहमिति भूतकालः नाकमारूढवानस्मीत्यर्थः। शेषं पूर्ववत् ।।10।।

## एकादशी

**बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजंव्वदत बृहस्पतिं वाजञ्जापयत। इन्द्र व्वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत ।।११।।**

**अन्वय :** (हे दुन्दुभयः) बृहस्पतये वाचं वदत। (हे) बृहस्पते! वाजं जय। वृहस्पतिं वाजं जापयत। हे इन्द्र वाजं जय, इन्द्राय वाचं वदत। इन्द्रं वाजं जापयत।

**व्याख्या :** हे दुन्दुभिगण! तुम लोग वृहस्पति से कहो कि आप संग्राम में विजय प्राप्त करें एवं तुम लोग बृहस्पति को संग्राम में विजय प्राप्त कराओं। हे इन्द्र तुम विजय प्राप्त करो। हे दुन्दुभिगण! इन्द्र के लिए अपनी वाणी को प्रकट करो। तथा इन्द्र को संग्राम में विजय दिलाओं।

यहाँ सप्तदश (सत्रह) दुन्दभियों में एक का वादन होता है इस मन्त्र पाठ से तथा शेष दुन्दुभियो का वादन मौन होकर।

**म० :** 'बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति तूष्णीमितरानिति' (का. 14। 3। 15) अनुवेद्युच्छ्रितस्थाण्वारोपितसप्तदशदुन्दुभीनां मध्ये एकं मन्त्रेणाहन्ति षोडश तूष्णीम्। यजुः विप्रयज्ञे मन्त्रः हे दुन्दुभयः, यूयं बृहस्पतये इति वाचं वदत। किम्। यत् हे बृहस्पते, त्वं वाजमन्नं जय। किंच हे दुन्दुभयः, यूयमेव बृहस्पतिं वाजमन्नं जापयत। बृहस्पतिनान्नजयं कारयतेत्यर्थः। 'जि जये' इत्यस्य हेतुमण्णिचि 'क्रीङ्जीनां णौ' (पा. 6। 1। 48) इति धातोराकारे कृते 'अर्त्तिह्रीग्लीरीक्नूयोक्ष्मायातां पुग्णौ' (पा. 7। 3। 36) इति पुगागमे लोण्मध्यमबहुवचने जापयतेति रूपम्। क्षत्रयज्ञे दुन्दुभिवादनमन्त्रः। हे दुन्दभयः, यूयमिन्द्रायेति वाचं वदत यत् हे इन्द्र, त्वं वाजं जय। इन्द्रवाजं यूयं जापयतेति पूर्ववत् ।।11।।

## द्वादशी

**एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत**

**बृहस्पति वाजं वनस्पतयो विमुंच्यध्वम्। एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं वनस्पतयो विमुंच्यध्वम् ।।१२।।**

**अन्वय :** (हे दुन्दुभयः) वः एषा सा वाक् सत्या समभूत्, यया बृहस्पतिः वाजम् अजीजपतं। बृहस्पति वाजम् अजीजपत्। (हे) वनस्पतयः (दुन्दुभयः) यूयं विमुच्यध्वम्।

**व्याख्या :** हे दुन्दुभियों! तुम्हारी वह वाणी सत्य हुई जिसके द्वारा बृहस्पति को तुमने संग्राम में विजय प्रदान किया। जिसप्रकार बृहस्पति अन्नजयी हुए उसी प्रकार इन्द्र भी विजय को प्राप्त हुए। हे वनस्पति (काष्ठ) निर्मित दुन्दुभियों। तुमलोग अपने शब्दों से रथों को दौड़ने के लिए प्रेरित करो।

यहाँ सत्रहदुन्दुभियों के बादन को दर्शाया गया है। इन दुन्दुभियों का निर्माण काष्ठ से होता है। इनके बजने के बाद ही युवा क्षत्रिय अपने धनुष पर बाण रखकर उत्तर की ओर बलपूर्वक सन्धान करता है।

**म० :** 'एषा व इति मन्त्रहतमवहरते तूष्णीमितरानिति' (का. 14। 4। 9। 10) सप्तदशदुन्दुभीनां मध्ये मन्त्रवादितं मन्त्रेणावतारयति षोडश तूष्णीं स्थाणुभ्यः। पूर्वो मन्त्रो विप्रयज्ञे उत्तरः क्षात्रे। हे दुन्दुभयः, वो युष्माकमेषा वाक् सत्या समभूत् तथ्या जाता। यया वाचा बृहस्पतिं वाजमजीजपत। पुनर्बृहस्पति वाजमजीजपत 'अभ्यासे भूयांसमर्थ मन्यन्ते' (नि. 10। 42) इति यास्कोक्तेर्भूयानर्थो ग्राह्यः। अत्यन्तं बृहस्पतिमन्नजयं कारितवन्तो यूयं यया वाचा सा सत्या जातेत्यर्थः। जयतेर्णिजन्तस्य लुङि मध्यमबहुवचनेऽजीजपतेति रूपम्। हे वनस्पतयो वनस्पतिविकारा दुन्दुभयः, यूयं विमुच्यध्वं कृतकृत्याः सन्तो विमोचनं कुरुत। क्षात्रे यज्ञे उत्तरो मन्त्रः। यया वाचा इन्द्रं वाजमजीजपत सा सत्याभूदतो यूयं विमुच्यध्वं तुल्यम् ।।12।।

## त्रयोदशी

**देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषम्। वाजिनो वाजजितोऽध्वनस्कभ्नुवन्तो योजना मिमानाः काष्ठां गच्छत ।।१३।।**

**अन्वय :** सत्यप्रसवसः सवितुर्देवस्य सवे अहं वाजजितः बृहस्पतेः

वाजं जेषम्। (जयेयम्)। हे वाजिनः वाजजित (त्वम्) अध्वनः स्कभ्नुवन्तः योजना मिमानाः काष्ठां गच्छत।

**व्याख्या** : सत्यप्रेरक सवितादेवता की आज्ञा से मैं संग्राम विजयी बृहस्पति की कृपा से संग्राम में विजय प्राप्त करूँ। संग्राम (युद्ध) को जीतने वाले हे अश्वों! तुम लोग लम्बे मार्गो की दूरी को कम करते हुए अत्यन्त तीव्र गति से अत्यन्त अल्प समय में निर्दिष्ट स्थान पर जाओ।

**म०** : 'देवस्याहमिति यजुयुक्तमारोहति यजमानः' (का. 14। 3। 18) मन्त्रयुक्तं रथं यजमान आरोहेत्। सत्यप्रसवसः सत्याभ्यनुज्ञस्य सवितुर्देवस्य सवेऽनुज्ञायां वर्तमानोऽहं वाजजितोऽन्नजेतुर्बृहस्पतेः संबन्धिनं वाजमन्नं जेषं जयेयं। जयतेर्लेटि उत्तमैकवचने 'लेटोऽडाटौ' (पा. 3। 4। 94) इत्यडागमे 'सितब्बहुलं लेटि' (पा. 3। 1। 34) इति सिप् प्रत्ययः 'इतश्च लोपः परस्मैपदेषु' (पा. 3। 4। 97) इति मिप् इकारलोपे गुणे च जेषमिति रूपम्। यद्वा लुङि अंङि उत्तमैकवचनेऽडभावे। 'वाजिन इति वाचयतीति' (का. 14। 3। 22)। हे वाजिनोऽश्वाः, यूयं काष्ठां गच्छत् आज्यन्तं प्राप्नुत। उत्कर्षं गच्छतेत्यर्थः। आज्यन्तोऽपि काष्टोच्यते। 'क्रान्त्वा स्थिते भवति' (नि. 2। 18) इति यास्कोक्तेः। 'काष्टोत्कर्षे स्थितौ दिशि' इत्याभिधानाच्च। किंभूता यूयम्। वाजजिताः अन्नस्य जेतारः। तथा अध्वनो मार्गान् स्कभ्नुवन्तः रुन्धान्तः क्षोभयन्तः। स ह्यश्वस्वभावः। तथा योजना योजनानि मिमानाः अतिशीघ्रतया परिच्छिन्दन्तः ॥13॥

## चतुर्दशी

**एष स्य वाजी क्षिपणिन्तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि। क्रतुन्दधिक्राऽअनु सꣳसनिष्यदत्पथामङ्काꣳस्यन्वापनीफणत्स्वाहा ॥१४॥**

**अन्वय** : एष स्य वाजी, ग्रीवायां कक्षे अपि आसनि (आस्ये) (अपि) बद्धः क्षिपणि तुरण्यति, दधिक्रा क्रतुम अनु सं सनिष्यदत् पथाम् अंकांसि अन्वापनीफणत्स्वाहा।

**व्याख्या** : यह वही घोड़ा है जो, ग्रीवा में, बगल में तथा मुख मे लगाम आदि के द्वारा बद्ध होने पर भी चाबुक को जरा सा भी न

सहता हुआ अत्यन्त वेग से दौड़ता है। अपने उपर आरोही को धारण करता हुआ उसके अभिप्राय को समझकर शीघ्र ही निम्नोन्नत मार्गों को भी सरल कर देता है। इसके लिए यह आहुति प्रदान की जाती है। इसमें अश्व की स्तुति की गई है।

यहाँ अनुक्रतुं पद अश्वारोही के अभिप्राय का बोंधक है। विशेष पदों के अर्थ भाष्य में देखें।

**म० :** 'एष स्य इति प्रत्यृचं जुहोत्यनुमन्त्रयते वेति' (का. 14। 4। 3-4)। ऋग्द्वयेनाज्यं जुहोत्यश्वाननुमन्त्रयते वा। अश्वदेवत्ये जगत्यौ दधिक्रावदृष्टे। त्यच्छब्दस्तच्छब्दपर्यायः। छान्दसः स्यः। एष वाजी सोऽयमश्वः क्षिपणिम् क्षिप्यते प्रेर्यतेऽनया सा क्षिपणिस्तां कशां कशाघातमनु तुरण्यति तूर्णमध्वानमश्नुते। यद्वा क्षिपणि तुरण्यति कशं त्वरयति। कशायास्त्वरया शीघ्रं धावतीत्यर्थः। किंभूतोऽश्वः। ग्रीवायामपि कक्षे आसनि आस्ये च बद्धः तत्तदुचितरज्जुविशेषैः। 'पद्दन्-' (पो. 6। 1। 63) इत्यादिना आस्यशब्दस्यासन्नादेशः सप्तम्याम्। ग्रीवायामुरोवध्रेण बद्धः। कक्षयोः समीपे अपिकक्षं पर्याणदेशस्तत्र सन्नहनरज्जवा बद्धः। आस्ये मुखे कविकया बद्धः। तथा दधिक्राः दधाति अश्ववारमिति दधिः। 'आहगम-' (पा. 3। 2। 171) इति किप्रत्ययः। दधिः सन् क्रमतेऽध्वानमिति दधिकाः। विटि क्रमतेराकारः। यद्वा दधीन्धारकान्मार्गावरोधनद्रिपाषणगर्तकण्टकादीनप्यतिक्रा-मतीति दधिक्राः। तथा ऋतुं सादिनोऽभ्रिप्रायमनु संसनिष्यदत्सम्यगनुसंदधानः सादिसंकल्पानुसारेण गच्छन् 'दाधर्तिदर्धाति-' (पा. 7। 4। 65) इत्यादिना स्यन्दतेर्यङ्लुकि निपातोऽयम्। तथा पथा मार्गाणामहांसि लक्षणानि कुटिलानि निम्रोन्नतानि अन्वापनीफणत् अतिशीघ्रं प्राप्नुवन्। समत्वमापादयन्नित्यर्थः। अन्वाङ्पूर्वस्य फणतेर्गत्यर्थस्य यङ्लुकि निपातः। पूर्ववत्। एवंविधाऽश्व-स्तुतीति संबन्धः। स्वाहा सुहुतमस्तु ।।14।।

**पञ्चदशी**

**उत स्मास्य द्रवतस्तुरण्यतः पर्णन्न वेरनुवाति प्रगर्धिनः। श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा ।।१५।।**

**अन्वय :** उत स्म, (अपि च) अस्य अश्वस्य द्रवतो तुरण्यतः

अङ्कसं प्रगर्धिनः वेः (पक्षिणः) पर्णं न अनुवाति। ऊर्जासह तरित्रतः दधिक्राव्णः ध्रजतः श्येनस्य इव (भाति)।

**व्याख्या** : अत्यन्त वेग से दौड़नेवाले इन घोड़ों के वस्त्र चामरादि श्रृंगारसाधन वैसे ही दृश्यमान हो रहे है जिस प्रकार प्रबलवेग से निर्दिष्ट स्थान की ओर उड़ने वाले पक्षी के पंखों के समान अनुलक्षित हो रहे है। अपनी शक्ति के साथ प्रबल वेग से आरोही के उत्साह को बढ़ाते हुए ये अश्व बाजपक्षी के समान प्रतीत हो रहे हैं।

**म॰** : उत स्म अपिच अस्याश्वस्य अंकसं श्रृंगारचिह्नं वस्त्रचामरादिकं परि सर्वस्मिन्नपि देहे वर्तमानं सत् अनुवाति गच्छन्तमश्वमनु उत्क्षिप्तवेन दृश्यमानं गच्छति। कस्य किमिव। वेः पक्षिणः पूर्ण न पक्ष इव यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षप्तो गच्छन्नवलोक्यते तथा धावतोऽश्वस्यांकसरूपं वस्त्रचामरादिकं विस्पष्टमवलोक्यत इत्यर्थः। किंभूतस्याश्वस्य। द्रवतो गच्छतः। तथा तुरण्यतस्त्वरयतः प्रगर्धिनः प्रगृथ्यतीति प्रगर्धी अवधिं प्राप्तुं कांक्षतः पक्षिमात्रस्य पर्णमंकसदृष्टान्तत्वेनाभिहितम्। शीघ्रधावने श्येनदृष्टान्त उच्यते। श्येनस्येव ध्रजतो गच्छतो वेगेन 'ध्रज गतौ' दधिक्राव्णः दधीन्क्रमते दधिक्रावा धारकपर्वताद्यतिक्रामिमाः। 'अन्येभ्योऽपि दृश्यन्ते' (पा. 3। 2। 75) इति क्रमतेर्वनिपि 'विगनोः-' (पा. 6। 4। 41) इति आकारः। ऊर्जां बलेन सह तरित्रतः मार्ग भृशं तरतः यङ्लुकि निपातोऽयम्। स्वाहा सुहुतमस्तु ।।15।।

## षोडशी

**शं नौं भवन्तु वाजिनो हवैषु देवतांता मितद्रंवः स्वर्काः।**
**जम्भयन्तोऽहिं वृकृꣳरक्षांꣳसि सनेम्यस्मद्युंयवन्नमींवाः ।।१६।।**

**अन्वय** : वाजिनः न (अस्मदर्थे) शं भवन्तु। देवताता (यज्ञे) हवेषु मितद्रवः, स्वर्काः अहिं वृकं रक्षांसि, जम्भयन्तः (नाशयन्तः) सनेमि (शीघ्रमेव) अमीवाः अस्मद् युवयन् पृथक् (कुर्वन्तुः)।

**व्याख्या** : यज्ञ में देवकार्य के लिए आवाहित होने पर ये अश्व हमारे लिए सुखकर (कल्याणकारी) हों। जो अश्व तीव्रगति से निर्दिष्टस्थान पर पहुँच जानेवाले, श्रेष्ठ एवं दर्शनीय हैं। ये अश्व, मार्ग में बाधा पहुचाने वाले सर्प, भेड़िये तथा राक्षसादिविघ्नों को नष्ट करते हुए शीघ्र

ही हमे रोगों से दूर करें। अर्थात् ये हमें व्याधिरहित करें।

**म॰ :** 'उत्तरेण तृचेन चेति' (का. 14। 4। 5) शं न इति ऋक्त्रयेणाज्यहोमोऽश्वाभिमन्त्रणं वा। अश्वदेवत्या विराड्वसिष्टदृष्टा दशाक्षरचतुःपादा। देवानां कर्म देवतातिः 'सर्वदेवात्तातिल्' (पा. 4। 4। 142) इति देवशब्दात् कर्मणि तातिल्प्रत्ययः 'लिति' (पा. 6। 1। 193) इति प्रत्ययात्पूर्वस्य वकारस्योदात्तत्वम्। तस्य सप्तम्यां 'सुपां सुलुक्' (पा. 7। 1। 39) इत्यादिना डेराकारः देवताता देवतातौ यज्ञे हवेषु आह्वानेषु सत्सु वाजिनोऽश्वा नोऽस्माकं शं सुखकरा भवन्तु। किंभूताः। मितद्रवः मितं परिमितं द्रवन्ति गच्छन्तीति मितद्रवः। क्विपि तुगभाव आर्षः। स्वर्काः शोभनोऽर्को येषां ते सुरुचः स्वञ्चना वा। तथा अहिं सर्प वृकमरण्यश्वानं रक्षांसि राक्षसान् च जम्भयन्तो नाशयन्तः। किंच तेऽश्वा अस्मत्सकाशात्सनेमि क्षिप्रम् अमीवा व्याधीन्युयवन् पृथकुर्वन्तु। 'यु पृथग्भावे' अस्य ह्वादित्वे लडि रूपम् गुणाडभावावार्षो। सनेमीति पुराणनाम। इह तु क्षिप्रवाचकः ।।16।।

## सप्तदशी

**ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः। सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳसमिथेषु जभ्रिरे ।।१७।।**

**अन्वय :** ते विश्वे (सर्वे) वाजिनः मितद्रवः हवनश्रुतः अर्वन्तः अश्वाः नः (अस्माकं) हवं (आह्वानं) श्रृण्वन्तु। (ते) सहस्त्रसाः मेधसाता सरिष्यवः भवन्ति ये (चा) समिथेषु महः धनम् जभ्रिरे। (आहृतवन्तः)।

**व्याख्या :** वे सभी अश्व परिमित समय में ही निर्दिष्टस्थान को प्राप्त करने वाले, आह्वानों को सुनने वाले, कुटिलगतिवाले मेरे इस आह्वान को सुनें। वे अन्नादि के द्वारा असंख्यजनों के पालन करने वाले यजमानों के पवित्र यज्ञशाला में स्थित होने वाले हैं। ये अश्व संग्रामों में विपुल! धन की प्राप्ति भी कराते हैं।

**म॰ :** अश्वदेवत्या जगती नाभानेदिष्ठदृष्टा। विश्वे सर्वे ते वाजिनोऽश्वा नोस्माकं हवमाह्वानं श्रृण्वन्तु। किंभूता अर्वन्तः इर्य्यति कुटिलं गच्छन्तीत्यर्वन्तः। 'ऋ गतौ' इत्यस्माद्वनिप् 'अर्वणस्त्रसावनञः' (पा. 6। 4। 127) इति त्रन्तादेशे रूपम्। हवनश्रुतः हवनमाह्वानं श्रृण्वन्तीति हवनश्रुतः।

मितद्रवः यजमानचित्तानुकूल्येन परिमितगामिनः। सहस्रसाः सहस्रस्यानेकजन-तृप्तिक्षमस्य महतोऽन्नराशेः सनितारो दातारः। मेधसाता सनिष्यवः मेधो यज्ञः सन्यते संभज्यते यत्र सा मेधसातिर्यज्ञशाला। डेर्डाकारः। तस्यां सनिष्यवः संभक्तारः पूरयितारः। ते के। येऽश्वाः समिथेषु संग्रामेषु महः महत्पूज्यं वा धनं जभ्रिरे जहिरे आहृतवन्तः ॥17॥

### अष्टादशी

**व्वाजेंवाजेऽवत व्वाजिनो नो धनेंषु विप्रा अमृताऽऋतज्ञाः।**
**अस्य मध्वंः पिबत मादयंध्वं तृप्ता यांत पथिभिर्देवयानैः ॥१८॥**

**अन्वय :** हे वाजिनः वाजे (संग्रामे) वाजे, नः (अस्मान्) अवत। धनेषु (माम्अवत)। हे विप्राः अमृताः ऋतज्ञाः अस्य मध्वः, पिबत मादयध्वं तृप्ताः देवयानैः पथिभिर्यात (गच्छत)।

**व्याख्या :** हे अश्वो। प्रत्येक संग्राम में मेरी रक्षा करने वाले। धन प्राप्ति में भी मेरी सहायता करो। हे मेधावी दीर्घजीवी, यज्ञ के विधियों को अच्छी तरह जानने वाले देवों! ब्राह्मणों! इस मधुरसोमरस का पान करो, तथा तृप्त एवं सन्तुष्ट होकर देवयानमार्ग से प्रस्थान करो।

**म० :** अश्वदेवत्या त्रिष्टुप् वसिष्टदृष्टा। हे वाजिनोऽश्वाः, वाजेवाजे सर्वस्मिन्नन्ने उपस्थिते सति धनेषु चोपस्थितेषु सत्सु नोऽस्मानवत पालयत। किंभूता यूयम्। विप्रा मेधाविनः परिदृष्टकारिणः अमृता अमरणधर्माणः ऋतज्ञाः सत्यज्ञाः यज्ञज्ञा वा। किंच अस्य मध्वः पिवत। कर्मणि षष्ठी। इदं मधुधावनात्पूर्वं पश्चावघ्रायमाणं नैवारचरुलक्षणं मधुरं हविः पिबत। पीत्वा च मादयध्वं तृप्ता भवत। ततस्तृप्ताः सन्तो देवयानैर्देवाधिष्ठितैः पथिभिर्मार्गैर्यात गच्छत ॥18॥

### एकोनविंशी

**आ मा वाजंस्य प्रसवो जंगम्यादेमे द्यावांपृथिवी विश्वरूंपे।**
**आ मां गन्तां पितरां मातरा चा मा सोमोंऽअमृतत्वेनं गम्यात् ॥**
**वाजिंनो वाजजितो वाजंꣳससृवाꣳसो बृहस्पतेंर्भागमवंजिघ्रत निमृजानाः ॥१९॥**

**अन्वय :** मा, (ममपार्श्वे) वाजस्य प्रसव आजगम्यात्। इमें विश्वरुपे द्यावापृथिव्यौ मा आ अगन्ताम्। आगच्छत् पितरा मातरा च,

सोमः अमृतत्वेन मा आगम्यात्। आगच्छेत वाजजितः वाजिनः! वाजं ससृवांसः निमृजानः बृहस्पतेः भागं अवजिघ्रत (आघ्राणं कुरुत)।

**व्याख्या :** यजमान प्रार्थना करता है–अन्नोत्पत्ति की विधि तथा सामर्थ्य का (ज्ञान) हमें प्राप्त हो। सर्वरूपात्मक ये दोनों द्युलोक एवं पृथिवी लोक हमारे पिता एव माता के समान है। ये अच्छी तरह हमें प्राप्त हों। संसार के पालक और निर्माण करने के कारण इन्हें (द्यावापृथिवी) को माता पिता कहा गया है। सोम अपनी अमृतत्त्व शक्ति के साथ मुझे प्राप्त हो। संग्राम में विजयप्राप्त करने वाले, हे अश्वों! यजमान को पवित्र करते हुए तुम लोग वृहस्पति देवता के उस नैवार (चरुभाग का आघ्राण करो।

**म० :** 'अवरुह्य नैवारमालभते तीर्थे स्थितमामा वाजस्येति' (का. 14। 4। 11) यजमानो रथादवतीर्य चात्वालोत्करान्तरे स्थितं नैवारं चरुं स्पृशति। प्रजापतिदेवत्या त्रिष्टुब् वसिष्टदृष्टा। वाजस्यान्नस्य प्रसव उत्पत्तिर्मा मामाजगम्यात् आगच्छत्। गच्छतेर्व्यत्ययेन ह्वादित्वे लिङि रूपम्। आ इमे विश्वरूपे सर्वरूपात्मिके इमे द्यावापृथिव्यौ मां प्रत्यागच्छेत्। लिङि रूपम्। सोमश्चामृतत्वेन सहितो मा मामागम्यात्। चतुर्थ्यर्थे तृतीया। अमृतत्वाय मम देवत्वजन्मने सोमो मां प्रत्यागच्छेत्। लिङि रूपम्। 'यजुर्युक्ता नाघ्रापयति वाजिन इति' (का. 14। 4। 12) इति। मन्त्रेण युक्तानश्वान्नैवारचरुमाघ्रापयेत्। अश्वदेवत्य यजुः हे वाजिनोऽश्वाः, यूयं बृहस्पतेः संबन्धि भागं चरुमवजिघ्रत आघ्राणं कुरुत। किंभूताः। वाजजितः वाजस्यान्नस्य जेतारः। वाजमन्नं जेतुं ससृवांसः सृतवन्तो गतवन्तः सर्तेः क्वसुपत्यये रूपम। निमृजानाः 'मृजूष् शुद्धौ' शानच्प्रत्ययः। शोधयन्तः चरुमेनं यजमानं वा पुनन्तु इत्यर्थः ।।19।।

### विंशी

**आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा ।।२०।।**

**अन्वय :** आपये स्वाहा, स्वापये स्वाहा अपिजाय स्वाहा, क्रतवे वसवे अहर्पतये, मुग्धाय अह्ने स्वाहा। मुग्धाय वैनं शिनाय, आन्त्यायनाय

इस यजमान के केन्द्र (मध्य) स्थान हो। हे धनुष! तुम इन्द्रदेवता के समान वृत्रनाशक हो। हे धुनषकोटियों! तुम मित्र एवं वरुणदेवता से सम्बन्धित हो। यह राजा यजमान तुम्हारी सहायता से विध्नकारीशत्रुओं का वध करें। हे बाणों! तुम शत्रुओं के विदारक तथा उनके दर्प को भंग करने वाले अर्थात् उनको भयभीत करने वाले हो। तुम इस राजा यजमान की पूर्वादि चारों दिशाओं में रक्षा करो।

यहाँ उल्ब का अर्थ अप्रत्यक्ष होने से है। अर्थात् कुछ ही समय में वह इन साधनों से सम्पन्न होकर राज्य को प्राप्त करेगा। राजा हो जायेगा। अतः उल्व शब्द का लक्षणया अर्थ करना चाहिए।

**म० :** 'तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम्' (का. 15। 5। 5) 'तार्प्यं परिधापयतीति' (15। 5। 7)। तार्प्यपाण्ड्वाधीवासोष्णीषाणि क्रमेण चतुर्भिर्यजुर्भिः परिधत्ते। तार्प्यक्षौमं वल्कलं घृताक्तवस्त्रं वा तार्प्यदैवतम्। हे तार्प्य, त्वं क्षत्रस्य यजमानस्य उल्वं गर्भाधारभूतमुदकमसि। यजमानो गर्भस्थानीयः। 'पाण्डुं निवस्त इति' (का. 15। 5। 12)। रक्तकम्बलं परिधत्ते। पाण्डुदैवतम्। क्षत्रस्य गर्भस्थानीयस्य यजमानस्य जरायु गर्भवेष्टनचर्म हे पाण्डु, त्वमसि। 'अधीवासं प्रतिमुच्येति' (का. 15। 5। 13) क्रमुकं गले बध्नाति। अधीवासदैवतम्। हे अधीवास, त्वं क्षत्रस्य योनिरसि गर्भसंभवस्थानं योनिः। 'उष्णीषंसंवेष्ट्य निवीतेऽवगूहते नाभिदेशे परिहरते वेति' (का. 15। 5। 13) शिरोवेष्टनं शिरसि संवेष्ट्य तत्प्रान्तौ परिहितवासो नीव्यां गोपयति नाभिदेशे वेष्टयति वा। उष्णीषदैवतम्। हे उष्णीष, त्वं क्षत्रस्य नाभिर्गर्भबन्धनस्थानमसि नाभ्या सन्नद्धा) गर्भं जायन्त इत्याहुः। 'इन्द्रस्य वार्त्रघ्नमिति धनुरातनोतीति' (का. 15। 5। 17) अध्वर्युधनुरधिज्यं करोति। धनुर्दैवतम्। हे धनुः, त्वमिन्द्रस्य संबन्धि वार्त्रध्नं वृत्रोऽनेन हन्यत इति वार्त्रघ्रं वृत्रनाशकं धनुरसि। तदातनोमीति शेषः। 'मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टीति' (का. 15। 5। 18)। मित्रस्य वरुणस्येति मन्त्राभ्यामस्य धनुषो बाहू प्रान्तौ करेण प्रत्येकं विमार्ष्टि। बाहुदैवते यजुषी। हे दक्षिणकोटे, त्वं मित्रसंबन्धी भवसि। हे बामबाहो, त्वं वरुणसंबन्धी भवसि। 'धनुः प्रयच्छति त्वयायमिति' (का. 15। 5। 19)। यजमानाय धनुर्ददाति। धनुदैवतम्। हे धनुः, अयं यजमानस्त्वया धनुषा कृत्वा वृत्रं शत्रुं वधेत् हन्यात्। 'दृबासीति प्रतिमन्त्रमादाय तिस्त्रइषूः प्रयच्छति पातैनमिति प्रतिमन्त्रमिति'

(का. 15। 5। 20)। दूवासीत्यादिमन्त्रत्रयेण वाणत्रयमादाय पातैनमित्यादिमन्त्र-त्रयेण प्रत्येकं यजमानाय ददाति। षड्यजूंषि इषुदेवत्यानि। हे इषो, त्वं रुजासि 'रुजो भगे' रुजति शत्रून्भनक्ति रुजा। हे इषो, त्वं क्षुमासि 'क्ष्मायी विधूनने' क्ष्मायाति शत्रून् कम्पयतीति क्षुमा। यजमानाय ददाति। हे इषवः, प्राञ्चं प्रत्यगञ्चनं पूर्वदिशयवस्थितमेनं यजमानं यूयं पात पालयत। प्रत्यञ्चं प्रत्यगवनं पश्चिमदिश्यवस्थितमेनं यजमानं पात। तिर्यञ्चं तिर्यगञ्चमितस्त-तोऽवस्थितमेनं यजमानं पात। दिग्भ्योऽन्याभ्योऽपि दिग्भ्यः सकाशादेनं पात रक्षत ।।8।।

### नवमी

**आ॒विर्म॑र्या॒ आवि॑त्तो अ॒ग्निर्गृ॒हप॑ति॒रावि॑त्त॒ इन्द्रो॑ वृ॒द्धश्र॑वा॒ऽआवि॑त्तौ मि॒त्रावरु॑णौ धृ॒तव्र॑ता॒वावि॑त्तः पू॒षा वि॒श्ववे॑दा॒ आवि॑त्ते॒ द्यावा॑पृथि॒वी वि॒श्वशं॑भुवा॒वावि॒त्तादि॑तिरु॒रुश॑र्मा ।।९।।**

**अन्वय** : (हे ऋत्विजः) मर्या (मनुष्यरूपा) यूयम् आविः प्रकटा भवथ। अग्निः आवृत्तः (आवेदितः) वृद्धश्रवा (इन्द्रः) आवृतः। धृतव्रतौ मित्रावरुणौ आवित्तौ। विश्ववेदा पूषा आवित्तः विश्वशम्भुवौ द्यावापृथिवी आवित्ते। उरुशर्मा अदितिः। (आवित्ता)

**व्याख्या** : हे ऋत्विजों! आप लोग प्रकट हों। आप कर्मानुष्ठान विधिपूर्वक करें। गृहपति अग्नि इस यजमानराजा को अपना समझें। इसी प्रकार कीर्तियुक्तइन्द्रदेवता, कर्मों के धारण करने वाले (कर्मपरायण) मित्रावरुण, सर्वज्ञपूषा, संसार का कल्याण करने वाले द्यावापृथिवी तथा सभी को शरण देने वाली अदिति, भी इस यजमान राजा को अपना समझे। यह राजा उपर्युक्त इन सभी देवताओं से परिचित हो। अर्थात् ये देवता इसका कल्याण सम्पादन करें।

**म०** : आविर्मैर्या इति वाचयतीति' (का. 15। 5। 21)। इषुसमर्पणानन्तरमाविर्मर्या इत्यादीन् सप्त मन्त्रानाविस्संज्ञान् यजमानं वाचयति। प्रजापतिदैवतम्। मर्या इति मनुष्यनामसु पठितम्। हे मर्या मनुष्या ऋत्विजः, यूयमाविः प्रकटा भवथेति शेषः। सम्यक्कर्मानुतिष्ठतेत्यर्थः। यद्वा हे मर्याः ऋत्विजः, अयं यजमानः आदिः। प्रकटो युष्मत्समक्षं कथ्यत इति शेषः। आवितो अग्निर्गृहपतिः। श्रुत्युक्तैर्विभक्तिव्यत्ययैर्व्याख्यायते गृहपालकायाग्नयेऽयं

यजमान आवित्तः। व्रतमिति कर्मनाम। धृतं व्रतं कर्म याभ्यां तो धृतव्रतौ ताभ्यां धारितकर्मभ्यां मित्रावरुणाभ्यामावित्तौ। आवित्तः आवेदित'। विश्ववेदसे सर्वज्ञाय पूष्णेऽयमावित्तः। विश्वस्य सर्वस्य शं सुखं भवति याभ्यां ते विश्वशंभुवौ ताभ्यां द्यावापृथिवीभ्यामावित्ते। वचनलिंगव्यत्ययः आवित्तः। उरु महत् शर्म शरणं सुखं वा यस्याः सा उरुशर्मा तस्मै अदितये आवित्ता आवितोऽयं यजमानः। यद्वा यथाश्रुतमेव व्याख्या। गृहपतिरग्निरावित्त आवेदितो यजमानमिति शेषः। एवग्रेऽपि ।।9।।

## दशमी

**अवेष्टा दन्दशूकाः प्राचीमारोह गायत्री त्वावतु रथन्तरꣳसाम त्रिवृत्स्तोमो वसन्त ऋतुर्ब्रह्मद्रविणम् ।।१०।।**

**अन्वय** : दन्दशूकाः अवेष्टा प्राचीम् आरोह। गायत्री छन्दः रथनतरं साम त्रिवृत्स्तोमः वसन्तऋतुः ब्रह्मऋतुः ब्रह्मद्रविणं त्वा (त्वाम्) अवतु।

**व्याख्या** : अत्यन्तदशनशील (मनुष्यादि को काटने (दंश प्रदान करने वाले) वाले सर्प आदि) आदि जीवों से इसकी (यजमान की) रक्षा हो। हे यजमान। तुम पूर्वदिशा में चलो। तुम्हारी गायत्री छन्द रथन्तरनामकसाम स्तोमों के मध्य में त्रिवृत् (नामक) स्तोम, तुम्हारी रक्षा करे। ऋत्रुओं में सर्वश्रेष्ठ वसन्तऋतु तथा वेद या ब्राह्मणजाति तुम्हारी रक्षा करें।

**म० :** 'अवेष्टा इति लोहायमाविध्यति केशवास्ये सदोऽन्तरुपविष्टा-येति' (का. 15। 5। 22)। सदःसमीपोवविष्टस्य दीर्घकेशनस्य मुखे ताम्रं क्षिपति। मृत्युनाशनं यजुः। अवपूर्वो यजिर्नाशनार्थः। दन्दशूका अत्यर्थं दशनशीला मृत्युहेतवः सर्पसदृशा यज्ञविघ्नकारिणो राक्षसादयोऽवेष्टाः नाशिता भवन्त्विति शेषः। 'तद्यो मृत्युर्यो वधस्तमेवैतदतिनयति' (5। 4। 1। 1) इति श्रुतिः 'सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिंगमिति' (का. 15। 5। 23)। यजमानं यथलिंगं प्रतिमन्त्रं प्रतिदिशं दिश आक्रमयन् वाचयति। पञ्च यजूंषि यजमानदेवत्यानि। हे यजमान, त्वं प्राचीं दिशमारोह आक्रमस्व। तथाविधां त्वां छन्दसां मध्ये गायत्री छन्दोऽवतु रक्षतु। साम्नां मध्ये अभि त्वा शूर नोनुम् इत्यस्यामृच्युत्पत्रं

रथन्तरं साम। (छ. सं. 1। 3। 1। 41) त्वां रक्षतु। स्तोमानां मध्ये त्रिवृत्स्तोमोऽवतु। ऋतूनां मध्ये वसन्त ऋतुरवतु। ब्रह्म ब्राह्मणजातिस्त्वदीयं द्रविणं धनं रक्षतु। यद्वा धनरूपा ब्राह्मणजातिस्त्वामवतु। ब्राह्मणादीनां धनसाधनत्वाद्धनत्मुच्यते। त्रिवृत्सोमस्य स्वरूपं सामब्राह्मणे (25 तमे ब्रा. 2। 1) आम्नातम्। 'तिसृभ्यो हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमयोद्यतौ त्रिवृतौ विष्टुतिरिरिति'। अस्यायमर्थः। उपास्मै गायतेत्यादीनि (का. सं. 6। 7। 36) तृचात्मकानि त्रीणि सूक्तानि सन्ति तेषु तिसृभिर्ऋग्भिर्गायेत्। काभिस्तिसृभिः। प्रथमया त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्‌गता गायेत्। तथा सति तिसृभिर्गीतं भवति सोऽयं प्रथमपर्यायः। द्वितीये पर्याये सूक्तत्रयगतयोत्तमा गायेत्। अनेन प्रकारेण त्रिवृत्स्तोमसंबन्धिनी विशिष्टाः स्तुतिः संपद्यते सेयं स्तुतिरुद्यतीति नाम्रा संपद्यतः इत्यर्थः ॥10॥

## एकादशी

**दक्षिंणामारोह त्रिष्टुप्त्वांवतु बृहत्सामं पञ्चदुशस्तोमौं ग्रीष्म ऋतुः क्षुत्रं द्रविंणम् ॥११॥**

**अन्वय :** (हे यजमान!) (त्वम्) दक्षिणामारोह, त्रिष्टुप, (छन्दः) बृहत्साम, पञ्चदशस्तोमः ग्रीष्मऋतु, क्षत्रं द्रविणम् त्वाम् अवतु।

**व्याख्या :** हे राजन्! (यजमान) तुम दक्षिण दिशा में चलो। त्रिष्टुपछन्द बृहत्साम्, पञ्चदशस्तोम, ग्रीष्मऋतु तथा क्षत्रियजाति तुम्हारी रक्षा करें।

**म० :** अथ द्वितीयो मन्त्रः। हे यजमान, त्वं दक्षिणां दिशमाक्रम। त्रिष्टुप् छन्दः। त्वामिद्धि हवामहे इत्यस्यामृच्युत्पन्नं बृहत्साम (छ. सं. 1। 3। 1। 1। 5)। पञ्चदश स्तोमः। ग्रीष्म ऋतुः। द्रविणरूपं क्षत्रं क्षत्रियजातिः एते त्वामवन्तु। क्षत्रं तव द्रविणमवत्विति वा। पञ्चदशस्तोमस्वेववम्नातः (25 तमब्रा. 2। 4) 'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिरिरिति'। पूर्वोक्तस्त्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः। अन्ये तु स्तोमा एकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्रायं क्रमः। प्रथमपर्याये आवृत्तिः पञ्चभिस्तत्रादौ

तिसृभिर्ऋग्भिर्गायेत् इतरे द्वे सकृत्सकृद्गायेत्। द्वितीयर्प्याये प्रथमां सकृत् मध्यमां तिसृभिः तृतीयां सकृत्। तृतीयपर्याये आद्ये द्वे सकृत तृतीयां तिसृभिरिति पञ्चदशस्तोमसंबन्धिनी विष्टुतिः पञ्चपञ्चिनीत्यभीघीयत इत्यर्थः ।।11।।

## द्वादशी

**प्रतीचीमारोह जगती त्वावतु वैरूपꣳसाम सप्तदशस्तोमो वर्षाऽऋतुर्विडद्रविणम् ।।१२।।**

**अन्वय :** (हे यजमान) प्रतीचीम् दिशम् आरोह। जगती (छन्दः) सप्तदशस्तोमः वैरुपं साम, वर्षाऋतुः विड्द्रविणम् त्वाम् अवतु।

**व्याख्या :** (हे यजमान!) तुम पश्चिमदिशा में बढ़ों। जगती छन्दः सप्तदशस्तोम, वैरुपसाम, वर्षाऋतु और वैश्यजाति तुम्हारी रक्षा करें।

**म० :** अथ तृतीयो मन्त्रः। हे यजमान, त्वं प्रतीचीं दिशमारोह। जगती छन्दः त्वामवतु। यक्ष्याव इन्द्र ते शतमित्यस्यामृच्युत्पत्रं वैरूपं साम (छ. सं. 1। 3। 2। 4)। सप्तदशः स्तोमः। वर्षा ऋतुः। विट् वैश्यजातिलक्षणं द्रविणम्। एते त्वामवन्तु। यद्वा वैश्यजातिस्ते द्रविणमवतु। सप्तदशस्तोमस्त्वे-वमाम्नातः (25 तमब्रा. 2। 7) 'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिर्दशसप्ता सप्तदशस्य विष्टुतिरिति'। प्रथमपर्याये प्रथमां त्रिर्गायेत् मध्यमोत्तमे सकृत्। द्वितीयपर्याय प्रथमोत्तमे सकृन्मध्यमां त्रिर्गायेत्। तृतीयपर्याये प्रथमां संकृद्गायेन्मध्यमोत्तमे त्रिरिति सप्तदशस्तोमस्य विविधास्तुतिर्दशसप्तेत्यभिधीयत इत्यर्थः ।।12।।

## त्रयोदशी

**उदीचीमारोहानुष्टुत्वावतु वैराजꣳसामैकविꣳशस्तोमः शरदृतुः फलं द्रविणम् ।।१३।।**

**अन्वय :** (हे यजमान!) उदीचीम् दिशम् आरोह, अनुष्टुप् (छन्दः) वैराजं साम, एकविंशस्तोमः शरदऋतु फलं द्रविणं (त्वाम्) अवतु।

**व्याख्याः** हे यजमान! तुम उत्तरदिशा में बढ़ो। अनुष्टुप्छन्द

वैराजसाम एकविंशस्तोम, शरदऋतु तथा यज्ञफलरुपधन ये सभी तुम्हारी रक्षा करे।

**म० :** अथ चतुर्थो मन्त्रः। हे यजमान, त्वमुदीचीं दिशमारोह। अनुष्टुप् छन्दः। पिबा सोममिन्द्र मन्दतु त्वा एतस्यामृच्युत्पन्नं वैराजं साम (छ. सं. 1। 5। 1) एकविंशः स्तोमः। शरदृतुः। फलं यज्ञफलक्षणं द्रविणं धनम्। एते त्वामवन्तु। एकविंशस्तोमस्तेवमाम्नातः (25 तम. ब्रा. 2। 14) 'सप्तभ्यो हिंकरोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिरिति'। प्रथमपर्याये प्रथममध्यमे त्रिर्गायेदुत्तमां सकृत्। द्वितीयपर्याये प्रथमां सकृद्गायेन्मध्यमोत्तमेत्रिः। तृतीयपर्याये मध्यमां सकृद्गायेत् प्रथमोत्तमे त्रिरित्येकविंशस्तोमस्य विष्टुतिः सप्तसप्तिनीत्युच्यत इत्यर्थः ।।13।।

## चतुर्दशी

**ऊ॒र्ध्वामारो॑ह प॒ङ्क्तिस्त्वा॑वतु शाक्वरैव॒ते साम॑नी त्रिणवत्रय॒स्त्रि॒ꣳशौ स्तोमौ॑ हेमन्तशिशि॒रावृ॒तू व्वर्चो॒ द्रवि॑णं॒ प्रत्य॑स्तं॒ नमु॑चे॒ः शिर॑ः ।।१४।।**

**अन्वय :** हे यजमान! (त्वम्) ऊर्ध्वाम् दिशम् आरोह पक्तिछन्दः शाक्वररैवते सामनी त्रिनवत्रयस्त्रिंशौ स्तोमौ, हेमन्त शिशिरौ ऋतू वर्चः द्रविणम् (त्वाम्) अवतु! नमुचेः शिरः प्रत्यस्तम्।

**व्याख्या :** हे यजमान! तुम ऊपर की ओर बढ़ो। पंड्क्तछन्द शाक्वर तथा रैवत ये दोनों साम, त्रिणव तथा त्रयस्त्रिंश ये दोनों स्तोम, हेमन्त एव शिशिर ऋतुएँ तथा ब्रह्मतेजरुपधन ये सब तुम्हारी रक्षा करें। नमुचि नामक असुर का शिर दूर फेंक दिया गया।

यहाँ नमुचि का वध इन्द्र ने समुद्र के फेन (झाग) से वज्र बनाकर किया था। यह पौराणिक आख्यान इसी संहिता के–19-7। वें मन्त्र में तथा श. ब्रा. (1-7.3-1-3) में भी देखा जाता है।

**म० :** अथ पञ्चमो मन्त्रः। हे यजमान, ऊर्ध्वादिशमारोह। पङ्क्तिश्छन्द। प्रोष्वस्मै पुरोरथमित्येतस्यामृच्युत्पन्नं शाकरं साम (छ. सं. 2। 9। 1। 14। 1) रेवतीर्नः सधमाद इत्येतस्यामृच्युत्पन्नं साम रैवतम् (छ. सं. 1। 2। 2। 1। 9-2)। त्रिणवत्रयस्त्रिंशौ स्तोमौ। हेमन्तशिशिरावृतू।

वर्चस्तेजो ब्रह्मवर्चसं वा द्रविणम्। एते त्वामवन्तु। यद्वा वर्चस्तेजोऽभिमानी देवस्ते धनं रक्षतु। त्रिणवः स्तोम एवमाम्नातः (प. ब्रा. 3। 1) 'नवभ्यो हिंकरोति स तिसृभिः स पञ्चभिः स एकया नवभ्यो हिंकरोति स एकया स तिसृभिः स पञ्चभिर्नवभ्यो हिंकरोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणव इति'। प्रथमपर्याये प्रथमां त्रिर्गायेन्मध्यमां पञ्चकृत्वः उत्तमां सकृत्। द्वितीयपर्याये प्रथमां सकृद्गायेन्मध्यमां त्रिरुत्तमां पञ्चकृत्वः। तृतीयपर्याये प्रथमां पञ्चकृत्वो मध्यमां संकृदुत्तमां त्रिर्गायेत् सोऽयं त्रिरावृत्तनवसंख्योपेतत्वात्त्रिणवनामको वज्रसमानः स्तोमः। त्रयस्त्रिंशः स्तोम एवमाम्नातः (प. ब्रा. 3। 3) 'एकादशभ्यो हिंकरोति स तिसृभिः स सप्तभिः एकयैकादशभ्यो हिंकरोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिंकरोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिंश इति'। प्रथमपर्याये प्रथमां त्रिर्गायेन्मध्यमां त्रिरुत्तमां सप्तकृत्वः। तृतीयपर्याये प्रथमां सप्तकृत्वो मध्यमां सकृदुत्तमां त्रिर्गायेत्। सोऽयं त्रयस्त्रिंशः स्तोमः सर्वेषां स्तोमानामन्तः। 'आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तमिति' (का. 15। 5। 24)। व्याघ्रचर्मपश्चाखागे निहितं सीसमाक्रम्य पादेन क्षिपेत्। असुरदेवत्यम्। नमुचेरसुरस्य शिरो मस्तकं प्रत्यस्तम्। 'असु क्षेपणे' प्रतिगृह्य क्षिप्तं सीसरूपेण ।।14।।

### पञ्चदशी

**सोम॑स्य॒ त्विषि॑रसि॒ तवे॑व मे॒ त्विषि॑र्भूयात्। मृ॒त्योः पा॒ह्योजो॑ऽसि॒ सहो॑ऽस्य॒मृत॑मसि ।।१५।।**

**अन्वय** : (हे व्याघ्रचर्म) (त्वम्) सोमस्य त्विषिः (दीप्तिः) असि, मे त्विषिः तव इव भूयात्। (हे हिरण्यशकल!) त्वं मृत्योः पाहि (त्वम्) ओजः असि, सहः असि अमृतम् असि।

**व्याख्या** : हे व्याघ्रचर्म! तुम सोम (चन्द्रमा) की कान्ति के समान हो। मेरी भी कान्ति तुम्हारी जैसी हो जाय। हे सुवर्णखण्ड! मृत्यु से मेरी रक्षा करो, तुम ओजरूप, साहसरूप तथा विनाशहित हो।

**म०** : 'व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति' (का. 15। 5। 25)। अभिषेकार्थं राजानं व्याघ्रचर्मणि स्थापयेत्। चर्मदेवत्यं व्याख्यातम् (क. 5)। 'रुक्ममधः पदं कुरुते मृत्योरिति' (का. 15। 5। 26)। पादतले हिरण्यं कुर्यात्। रुक्मदैवतम्। हे सुवर्ण, मृत्योः सकाशान्मां पाहि पालय।

'शिरसि च नवतर्द्मथ्ं शततर्द्म वौजोऽसीति' (का. 15। 5। 27)। नवच्छिद्रं शतच्छिद्रं वा सौवर्णमण्डलं यजमानशिरसि कुर्यात्। रुक्मदैवतम्। हे हिरण्य, त्वमोजोऽसि अमुं जेष्यामीति मनोवृत्तिरोजः तद्रूपं त्वमसि। शारीरं बलं सहस्तद्रूपमसि। अमृतं विनाशरहितं त्वमसि ॥15॥

## षोडशी

**हिरण्यरूपाऽउषसौ विरोक उभाविन्द्राऽउदिथः सूर्यश्च। आरोहतं वरुण मित्र गर्तन्ततश्चक्षाथामदितिं दितिं च मित्रोऽसि वरुणोऽसि ॥१६॥**

**अन्वय :** (हे मित्रावरुणौ) (युवाम्) हिरण्यरुपौ, इन्द्रौ सूर्यश्च उषसः विरोके रात्रेः समाप्तौ उदिथः। (हे) वरुण मित्र! गर्तम् आरोहतम्। तम् अदितिम् दितिं च चक्षाथाम्। हे वामबाहो! त्वं मित्रोऽसि। हे दक्षिणबाहो वरुणोऽसि।

**व्याख्या :** हे मित्रावरुण! तुम दोनों सुवर्ण के समान गौरवर्ण वाले तथा सामर्थ्य से युक्त हो। रात्रि के समाप्ति पर उदित होते हो। हे वरुण एवं मित्र! तुम दोनों रथ के उपर स्थितगर्त में विराजमान होओ। वहाँ से तुम दोनों अनुग्रह एवं निग्रह की दृष्टि से देखते हो। (अर्थात्-यह पापी है, और यह पुण्यात्मा है। इसका विवेक आपको है। हे वामबाहु! तुम मित्र हो, तथा हे दक्षिणबाहु! तुम वरुण हो।

**म० :** 'बाहू उद्गृह्णाति हिरण्यरूपा इति' (का. 15। 5। 28)। यजमानबाहू ऊर्ध्वौ करोति। मित्रावरुणदेवत्या त्रिष्टुप् यजुरन्ता मित्रोऽसीति यजुः। हे वरुण शत्रुनिवारक, दक्षिणबाहो, हे मित्र सखिवत्पालक वामबाहो, तौ युवां गर्तं पुरुषमारोहत मारोहणं कुरुतम्। 'बाहू वै मित्रावरुणौ पुरुषो गर्तः' (5। 4। 1। 15) इति श्रुतिरध्यात्मविषयं व्याचष्टे। पुरुषारोहणानन्तर-मदितिमखण्डितां स्वसेनां दितिं खण्डितां परसेनां चक्षाथां क्रमेणानुग्रहदृष्टया समीक्षेथाम्। तौ कौ। यौ युवामुभौ द्वौ उषसो विरोके रात्रेः समाप्तौ उदिथः उदयं कुरुथः। एतेर्लटि मध्यमद्विवचने इथ इति रूपम्। सूर्योदयानन्तरं स्वस्वव्यापारे प्रवर्तेथे इत्यर्थः। सूर्यश्च उदेतिययोर्युवयोः कार्यसंपादनायेत्यर्थः। किंभूतौ युवाम्। हिरण्यरूपौ हिरण्यवद्रूपं ययोस्तौ सुवर्णखचितकटकाद्यलंकारेण हिरण्यवभासभानौ। तथा इन्द्रौ सामर्थ्योपेतौ। एवमध्यात्ममर्थः। अधिदैवं

त्वयमर्थः। हे वरुण, हे मित्र मित्रवरुणौ देवविशेषौ, युवां गर्तं रथोपरिभागं गर्तसदृशमारोहतम्। परबाणेभ्यो रक्षितुं चर्मकीलकादिभिराच्छादितो रथस्योपरिभागे गर्तसदृशो भवति। रथोऽपि गर्त उच्यते 'गृणातेः स्तुतिकर्मणः' (नि. 3। 5) इति यास्कोक्तेर्गर्तो रथः। यौ युवामुषसो विरोके उषःकालानन्तरम् उदिथः उद्गच्छथः सूर्यश्चेत्तदा उदेति। किंभूतौ। हिरण्यरूपौ अतितेजस्विनौ। इन्द्रौ परमेश्वरौ। ततो रथारोहणानन्तरमदितिं दितिं च युवां चक्षाथाम् अदितिमदीनं विहितानुष्ठातारं दितिं दीनं नास्तिकवृत्तं च पश्यतम्। अयं पापी अयं पुण्यवानिति युवां पश्यतमित्यर्थः। अमुमर्थं श्रुतिराह 'ततः पश्यतस्वं चारणं चेत्येवैतदाहेति' (5। 4। 1। 15) 'मित्रोसि वरुणोऽसीति वा' (का. 15। 5। 29)। अनेन मन्त्रेण वा बाहू उदृह्णाति। हे वामवाहो, मित्रोऽसि। हे दक्षिणवाहो, त्वं वरुणोऽसि त्वं वरुणोऽसि ।।16।।

## सप्तदशी

**सोम॑स्य त्वा द्युम्नेना॒भिषि॑ञ्चाम्य॒ग्नेर्भ्राज॑सा॒ सूर्य॑स्य॒ वर्च॒सेन्द्र॑-स्येन्द्रि॒येण॑। क्ष॒त्राणां॑ क्ष॒त्रप॑तिरे॒ध्यति॑ दि॒द्यून्पा॑हि ।।१७।।**

**अन्वय :** (हे यजमान!) सोमस्य द्युम्नेन त्वा अभिषिञ्चामि, अग्नेः भ्राजसा सूर्यस्य वर्चसः (त्वाम् अभिषिञ्चामि) इन्द्रस्य इन्द्रियेण त्वाम् अभिषिञ्चामि। (हे यजमान!) (त्वम्) क्षत्राणां क्षत्रपतिः एधि, दिद्यून् अति पाहि।

**व्याख्या :** हे यजमान! सोम के प्रकाश से या चन्द्रमा के यश से मैं तुम्हें अभिषिञ्चित करता हूँ। अग्नि के तेज से सूर्य के प्रखरप्रताप से इन्द्र के ऐश्वर्य तथा पराक्रम से तुम्हें अभिषिक्त करता हूँ। हे अभिषिक्तराजन। तुम क्षत्रियों के अधिपति (राजाधिराज) होकर वृद्धि को प्राप्त करो। शत्रु प्रेरित संकटों का अतिक्रमण करके प्रजा की रक्षा करो। उपर्युक्त सभी देवताओं का सामर्थ्य तुम्हें प्राप्त हो।

**म० :** 'स्थितं प्राञ्चमभिषिंचति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्वस्तृतीयेनामित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वां द्युम्रेनेति प्रतिमन्त्रमभिषिञ्चामीति सर्वत्र साकाक्षात्वात् क्षत्राणं क्षत्रपतिरेधीति चेममुष्येति च प्रथमो देवसूवदिति' (का. 15। 5। 30-33)। अस्यार्थः। रुक्मसहितव्याघ्रचर्मणि प्राङ्मुखमवस्थितं राजानं पुरोहितादयः पुरस्तादवस्थाया-

भिषिञ्वेयुः। पालाशौदुबरन्यग्रोधाश्वत्थानि चतुर्विधान्यभिषेकजलपात्रणि स्थापितानि। तत्र पालाशापात्रेण पुराहिताध्वर्वोरन्यतरः प्रथममभिषिञ्चेत्। इतरे स्वादयः पश्चादवस्थिता अभिषिंचेयुः। तानेवाह। स्वो राज्ञो भ्राता द्वितीयेनौदुम्बर- पात्रेण मित्रभूतः कश्चित् क्षत्रियस्तृतीयेन वटपत्रेण वैश्यश्चतुर्थेनाश्वत्थपात्रेणा- भिषिंचति। चतुर्णामभिषेतृणां क्रमेण सोमस्याग्नेः सूर्यस्येन्द्रस्य ते चत्वारो मन्त्रः। अभिषिञ्चामीति पदमग्निमेषु त्रिषु मन्त्रेष्वनुवर्तते। क्षत्रणमित्यवयवोऽपि प्रथमादिमन्त्रेषु योज्यः। इमममुष्येति मन्त्रं प्रथमः पुरोहितोऽध्वर्युर्वा देवसूहविः ष्विव नामग्रहणयुक्तं पठति। प्रथमग्रहणादन्येषामिम- ममुष्येति मन्त्रशेषो न भवति ब्राह्मणानांराजेति मन्त्रलिंगादिति सूत्रार्थः। चतुर्णा मन्त्रणां यजमानो देवता। हे यजमान, सोमस्य द्युम्रेन चन्द्रस्य यशसा त्वा त्वामभिषिंचामि तेनाभिषिक्तः सन् क्षत्राणां क्षत्रपतिरेधि क्षत्रियाणां सर्वेषां मध्ये क्षत्रपतिः क्षत्रियेश्वर एधि भव। अति दिद्यून् पाहि। 'दो अवखण्डने' द्यन्ति खण्डयन्ति दिद्यवो बाणा। 'इषवो वै दिद्यव इषुवध ामेवैनमेतदतिनयति' (5। 4। 2। 2।) इति श्रुतेः तानतिक्रम्य शत्रुप्रयुक्तानिष्वादीनपसार्य इमं यजमानं हे सोम, त्वं पाहि पालय ।।17।।

## अष्टादशी

**इमन्देवाऽअसपत्नथ्ं सुवध्वं महते क्षत्राय महते ज्येष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एषऽवोऽमी राजा सोमोऽस्माकंब्राह्मणानाथ्ं राजा ।।१८।।**

**अन्वय :** (हे देवाः) इमं महते क्षत्राय, महते ज्यैष्ठ्याय, महते जानराज्याय इन्द्रस्य इन्द्रियाय असपत्नं सुवध्वम्। प्रेरयध्वम् इमम् अमुष्य पुत्रम् अस्यै विशे अमी एष वः राजा अस्माकं ब्राह्मणनां राजा सोमः (अस्ति)।

**व्याख्या :** हे सोमादि देवो! आप इस यजमान को, महानबल, सर्व, ज्येष्ठभाव से सम्पन्न करें तथा महान् इन्द्र के समान ऐश्वर्य की प्राप्ति के लिए शत्रुरहित (इसे) राज्यपद पर प्रतिष्ठित करें। यह अमुक का पुत्र तथा अमुकी माता का पुत्र है। प्रजा की रक्षा के लिए ही इसका अभिषेक हुआ। हे अमुक देश के प्रतिनिधि जनों! अब से यह तुम्हारा राजा है। हम ब्राह्मणों के राजा सोम हैं। इस मन्त्र को पढ़कर अध्वुर्य

यजमान का अभिषेक करता है।

**म० :** इमं देवाः। व्याख्यातापि व्याख्यायते। हे देवाः सोमादयः, दशरथस्य पुत्रं कौशल्यायाः पुत्रं कोशलायै विशेप्रजायै तिष्ठन्तमिमं राममसपत्नं शत्रुरहितं कृत्वा महते क्षत्राय महते ज्येष्ठत्वाय महते जानराज्यायेन्द्रस्यैश्वर्याय यूयं सुवध्वं प्रेरयध्वम्। हे अमी कौशलाः, एष रामो वो युष्माकं राजा अस्माकं ब्राह्मणानां तु सोमो राजा। एतावन्तं मन्त्रं पठित्वा पुरोहितोऽध्वर्युर्वाभि-षिञ्चेत्। राजभ्रातुर्मन्त्रमाह। अग्नेर्भ्राजसाभिषिञ्चामि क्षत्राणमित्यादि इन्द्रस्येन्द्रिया-येत्यन्तो मन्त्रः। हे यजमान, अग्नेर्वैश्वानरस्य भ्राजसा तेजसा त्वामभिषिञ्चामि। क्षत्राणामित्यादेः पूर्ववद्याख्या। राजमित्रमन्त्रमाह। सूर्यस्य वर्चसामिषियामि। क्षत्राणामित्यादि पूर्ववत्। हे यजमान, सूर्यस्य तेजसा त्वामभिषिञ्चामि। अन्यत्पूर्ववत्। वैश्यमन्त्रमाह। इन्द्रस्येन्द्रियेणाभि- षिश्चामि। अन्यत्पूर्ववत्। वैश्यमन्त्रमाह। इन्द्रस्येन्द्रियेणाभिषिंचामि क्षत्राणामित्यादि पूर्ववत्। हे यजमान, इन्द्रस्य वीर्येण त्वामभिषिंचामि क्षत्राणामित्यादि पूर्ववत्। श्रुत्या तु द्युम्नादिशब्दै-वीर्याण्येव व्याख्यातानि ॥18॥

## एकोनविंशी

**प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः। ता आववृत्रन्नधरागुदक्ताऽअहिर्बुध्न्यमनु रीयमाणाः। विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि ॥१९॥**

**अन्वय :** वृषभस्य पर्वतस्य पृष्ठात् इयानाः नावः स्वसिचः प्रचरन्ति। ता उदकाः अहिंर्बुध्न्यम् अनुरीयमाणाः अधराग् आववृत्रन्। (हे प्रथम प्रक्रम) त्वं विष्णोः विक्रमणम् असि, विष्णोः विक्रान्तमसि, विष्णोः क्रान्तमसि।

**व्याख्या :** यहाँ अभिषेक के समय राजा के सिर से अभिषेक-जल की बूदें नीचे प्रवाहित हो रही है, उसी का वर्णन उपमाओं के साथ दिया गया है। मेघ के पृष्ठभाग से निकलने वाली प्रभूतजल से पूर्ण सरितायें अपने क्षेत्रों को सींचती हुई प्रवाहमान होती है। अथवा जो जल पर्वतपृष्ठ से आदित्यमण्डल की ओर प्रस्थान करते है। वे जल यजमान का सिंञ्चन करते हुए नीचे की ओर आ रहे हैं। दूसरा अर्थ यह है कि यहाँ पर्व शब्द अमावस्या पूर्णिमा आदि के बोधक है। अतः इन पर्वों पर

पूजित होने वाले कामनाओं के फल प्रदाता अग्निदेव के पृष्ठभाग से उठकर विश्व का सिंचन करने वाले आहुति परिणामभूत जलधाराये अदित्यमण्डल की ओर गमन करती है पुनः वे ही उपर गमन करके अन्तरिक्ष में मेघ का अनुसरण करती हुई नीचे की ओर प्रवाहित हो रही है।

इसी तत्व को आचार्य मनु ने–

अग्नौप्रास्ताहुतिः सम्यग् आदित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः। वृष्टेरन्नं ततः प्रजाः। नूयन्ते स्तूयन्ते स्तोत्रशस्त्र मन्त्रैरितिनावः।

मन्त्र में प्रयुक्त नावः शब्द का अर्थ यहाँ नौका नहीं है, अपितु नुदन्ति प्रेरयन्ति फलप्राप्त्यैता नावः आहुति परिणामभूता आपः प्रचरन्ति गच्छन्ति आदित्य मण्डल प्रति। इसी तरह पर्वाणि पौ़र्णमास्यामा मावास्यांचातुर्मास्यादीनि विद्यन्ते यस्य स पर्वतः तस्य पर्वतस्य (विशेष अर्थ भाष्य में देखा जा सकता है।) मन्त्रार्थ–हे मेरे प्रथम प्रक्रम तुम विष्णु द्वारा विजित भूलोक, द्वितीय पाद प्रक्षेप रूप से अन्तरिक्ष तथा तृतीयपादप्रक्षेप रुप से द्युलोक रूप हो। यहाँ व्याघ्रचर्म पर यजमान का तीन बार पाद प्रक्षेप–कराया जाता है।

**म॰** : 'कण्डूयन्याभिषेकेण प्रतिलिम्पते प्र पर्वतस्येति' (का. 15। 6। 8)। यजमानः कृष्णविषाणया कृत्वाभिषेकोदकेन स्वांगलग्नेन स्वांगं लिम्पति। अब्देवत्या त्रिष्टुप्। प्रेत्युपसर्गश्चरन्तीति पदेन संबध्यते। नावः प्रचरन्ति। नूयन्ते स्तूयन्ते स्तोत्रशस्त्रमन्त्रैरिति नावः। यद्वा नुदन्ति प्रेरयन्ति फलप्राप्त्यै ता नावः। आहुतिपरिणामभूता आपः प्रचरन्ति गच्छन्ति आदित्यमण्डलं प्रति। 'ग्लानुदिभ्यां डौः' (उ. 2। 64) इति नुदतेर्डौप्रत्ययः। किं कृत्वा। वृषभस्य वर्षितुरग्नेः पृष्ठात् पृष्ठप्रदेशात् उत्थायेति शेषः। किंभूतस्य वृषभस्य। पर्वतस्य पर्वाणि पौर्णमास्यमावास्याचातुर्मास्यादीनि विद्यन्ते यस्य स पर्वतस्तस्य 'तप्पर्वमरुद्भ्यां' इति तप्रत्ययः। किंभूता नावः। स्वसिचः स्वेनैवात्मनैव सिंचन्ति विश्वमभिषिंञ्चन्ति स्वसिचः। तथा इयानाः यन्तीत्येवंशीला इयानाः। एतेः 'ताच्छील्यवयोवचनशक्तिषु चानश्' (पा. 3। 2। 129) इति चानश्प्रत्ययः चित्वादन्तोदातं पदम्। गमनशीलाः ता हि आदित्यमण्डलं प्राप्य मध्यस्थानात्पृथिवीम्। तदुक्तम्। 'अग्नौ प्रास्ताहुतिः

सम्यगादित्यमुपतिष्ठते। आदित्याजयते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (म. 3। 76) इति। ता आहुतिपरिणामभूता आप आदित्यमण्डलं प्राप्याधराक् आववृत्रन् अधस्तादावर्तन्ते। वृतेर्णिजन्तालुङि रगागमश्छान्दसः। किंभूतास्ताः। उदक्ताः ऊर्ध्वमक्ताः। 'अञ्चु गति पूजनयोः'। ऊर्ध्वं गताः सत्यः अहिं मेधमनुरीयमाणः मेघमनुसरन्त्यः। रियतिर्गत्यर्थः। किंभूतमहिम्। बुध्न्यं बुध्नमन्तरिक्षं तत्र भवो बुध्न्यः। अन्तरिक्षे वर्तमानम्। यद्वायमर्थः। पर्वतशब्देनादित्य उच्यते। वृषभस्य वर्षितुः पर्वतस्यादित्यस्य पृष्ठादियानाः निर्गच्छन्त्यो नावः स्तुत्या आपः प्रचरन्ति सर्वतो गच्छन्ति। किंभूताः। स्वसिचः स्वयं शेक्यः आदित्योपरिष्टादापो नाव्या उच्यन्ते। तथा च श्रुतिः 'नाव्या आप एव यजुष्मत्य इष्टकाः' (10। 5। 6। 14) इत्युपक्रम्य 'षष्टिश्च वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्तीत्याह'। ता उदक्ता व्यक्ताः सत्यः बुधयमन्तरिक्षस्थमहिं मेघमनुरीयमाणा अनुप्रविश्य गच्छन्त्यः सत्यः प्रावृट्काले अधराक् अधास्ताद्भूमिं प्रति आववृत्रन् आवर्तन्ते आगच्छन्ति। यद्वायमर्थ ऋचोऽस्याः। वृषभस्य वर्षणसमर्थस्य पर्वतस्य हिमद्विन्ध्याद्रेः पृष्ठादियाना गच्छन्त्यो बहन्त्यो नावो नौतार्या महानद्यो गजाद्याः प्रचरन्ति स्वसिचः स्वमात्मीयं यजमानक्षेत्रं सिञ्चन्ति ताः ता एव नावोऽधराक् अध्रस्तात् आववृत्रन् राजसूययाजिनोऽर्था वर्तन्ते। किंभूताः। उदक्ता अभिषेकपात्रेषु उत्क्षिप्ताः प्रक्षिताः। तथा बुध्न्यं बुध्रशब्देन मूलमुच्यते तत्र भवं बुध्न्यं प्रधानमित्यर्थः। अहिमहन्तारं शत्रूणां यजमानमनुरीयमाणाः यजमानं प्रति सिच्यमानाः। 'चर्मणि त्रिर्विक्रमयति विष्णोरिति प्रतिमन्त्रमिति' (का. 15। 6। 9)। अध्वर्युर्यजमानेन व्याघ्रचर्मणि त्रिभिर्मन्त्रैस्त्रिवारं पादप्रक्षेपं पादप्रक्षेपं कारयेत्। त्रीणि यजूंषि यजमानदेवत्यानि। हे मदीय प्रथमप्रकम, त्वं विष्णोर्व्यापनीशीलस्य यज्ञपुरुषस्य जगदीश्वरस्य त्रिविकमावतारस्य विक्रमणं प्रथमपादप्रक्षेपेण जितो भूलोकोऽसि। हे द्वितीयप्रक्रम, त्वं विष्णोः क्रान्तं तृतीयपादप्रक्षेपण जितं त्रिविष्टपमसि। इदं मन्त्रत्रयं लोकत्रयजयहेतुभूतं तित्तिरिराह 'विष्णुक्रमान्क्रमते विष्णुरेव भूत्वेमांलोकानभिजयतीति'। 'इमे वै लोका विष्णोर्विक्रान्तं विष्णोर्विक्रमणं विष्णोः क्रान्तम्' (5। 4। 2। 6) इति श्रुतेः ।।19।।

**विंशी**

**प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ रू॒पाणि॒ परि॒ता ब॑भूव।**

**यत्कामास्ते जुहुमस्तन्नौ अस्त्वयममुष्य पितासावस्य पिता वयथं स्याम पतयो रयीणाथं स्वाहा। रुद्र यत्ते क्रिवि परं नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहा ।।२०।।**

**अन्वय :** (हे) प्रजापते! एतानि ताः विश्वारुपाणि परि त्वद् (परिभवितुं समर्थो)अन्यः न बभूव। यत्कामाः ते जुहुमः तत् फलं, नः अस्तु। अयम् अमुष्य पिता असौ यस्य पिता वयं रयीणां पतयः स्याम स्वाहा। हे रुद्र! यत् ते क्रिवि परं नाम तस्मिन् हुतम् असि। अमा गृहे मदीये इष्टमसि दत्तमसि स्वाहा।

**व्याख्या :** हे प्रजापति! इस दृश्यमान विविधरुपों वाले भुवनों के उपर आपसे अन्य और कोई देवता विशेष नहीं है जो सृष्टि आदि कर्म करने में समर्थ हो। अतः जिस कामना या मनोरथ को लेकर हम आपके लिए होम करते हैं वह मेरी अभिलाषा पूर्ण हो। यह राजा अमुक का पिता, हमारे प्रजाजनों के भी पालक (पिता) बने। प्रजापति की तथा इस राजा की कृपा से हम ऐश्वर्यदि से सम्पन्न हों। हे रुद्रदेवता! आपका ''दुष्टों के विनाशक' यह प्रसिद्ध नाम है, इसी नाम के निमित्त यह हवि आपको प्रदान की जाती है। हमारे घर में हमारे मनोरथों को आपने पूर्ण किया है जिसके लिए यह आहुति आपको समर्पित है।

**म॰ :** 'शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धो प्रजापत इति' (का. 15। 6। 11)। ततः सदसः शालासमागत्य पुत्रेऽन्वारब्धाशालाद्वार्येऽग्नौ जुहोति। प्रजापतिदेवत्या त्रिष्टुप् यजुर्मध्या तृतीयचतुर्थपादमध्येऽयममुष्येति यजुर्युक्ता। हे प्रजापते, त्वत्वत्तः अन्यो देवताविशेषः तानि एतानि विश्वा विश्वानि सर्वाणि रूपाणि नानाजातीयानि वर्तमानभूतभविष्यत्कालविषयाणि न परिबभूव परिभवितुं समर्थो नाभूत। परिभवः सुष्टेरप्युपलक्षणम्। त्वदन्यो देव एतानि भूतानि स्त्रष्टुं संहर्तु चाप्यशक्त इत्यर्थः। अतो वयं यत्कामास्ते जुहुमः यः कामो येषां ते यत्कामाः येन कामेन त्वां जुहुमः तत्कामरूपं फलं नोऽस्माकमस्तु। यजुर्व्याख्यायते। अयममुष्य पिता। असावस्य पितेति यथायथमेव नामग्रहः। यथा असौ दशरथोऽस्य रामस्य पिता। असावस्य पितेति यथायथमेव नामग्रहः। यथा असौ दशरथोऽस्य रामस्य पितेति। सर्वथा सपुत्रा वयं रयीणां धनानां पतयः स्याम भवेम। 'आग्नीध्रीये पालाशेन

शेषान् जुहोति रुद्र यत्त इत्युत्तरार्थ इति'। 'पालाशेनाभिषेकपात्रेणाभिषेकादक-शेषानाग्नीध्रीयाग्रेरुत्तरभागे जुहोति' (का. 15। 6। 12)। रुद्रदेवत्यम्। हे रुद्र, यत्ते तव क्रिवि कर्तृ हिंसितृ वा परमुत्कृष्टं नामास्ति। 'किवि हिंसाकरणयोः' इप्रत्ययः। एवं रुद्रं संबोध्य होमद्रव्यमाह। हे हविः, तस्मिन् रुद्रनाम्नि त्वं हुतमसि अमेष्टं चासि। अमाशब्दो गृहवाची। मदीये गृहे इष्टं दत्तमसि स्वाहा सुहुतमस्तु ।।20।।

## एकविंशी

**इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि। अव्यथायै त्वा स्वधायै त्वारिष्टोऽअर्जुनो मरुतां प्रसवेन जयापाम मनसा समिन्द्रियेण ।।२१।।**

**अन्वय :** हे रथ! त्वम् इन्द्रस्य वज्रोऽसि। (हे अश्वाः) प्रशास्त्रोः मित्रावरुणयोः प्रशिषा प्रशासनेन त्वाम् युनज्मि। अरिष्टः अर्जुनः अव्यथायै स्वधायै त्वा (आरोहयामि)। मरुतां प्रसवेन जय। हे अश्व! मनसा अपाम इन्द्रियेण सम्। (संगताः स्मः)

**व्याख्या :** हे रथ! तुम इन्द्रदेव के वज्र हो, जगत्शासक मित्रावरुण देवों के आदेश से तुम्हें जोड़ता (युक्त) करता हूँ। शत्रुओं से अनुपहिंसित (अपराजित) इन्द्र के समान मैं (यजमान) अपने राष्ट्र (देश) को निर्भय करने के लिए तथा धनादि ऐश्वर्य की प्राप्ति के लिए तुम पर आरोहण करता हूँ। हे अश्व! मरुतों के आदेश से विजय को प्राप्त करो। हमलोग अत्यन्त मनोयोग पूर्वक कार्य किये है अतः अब पराक्रम से भी सम्पन्न हैं।

**म० :** 'वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिरिति' (का. 15। 6। 15)। वाजपेये इव रथवाहणाद्रथमिन्द्रस्य वज्रोऽसीति मन्त्रेण भूमाववतार्य मित्रवरुणयोरिति मन्त्रेण चतुर्भिरश्वैर्वाजपेयवदेवयुनक्ति। प्रत्यश्वं मन्त्रः इन्द्रस्य वज्रोऽसीत्येव मन्त्रो न वाजपेयसंबन्धी सर्वः। तावन्मात्रस्यैवात्र पाठात्। पूर्ववदिति धूर्गृहीतं दक्षिणश्रोणिदेशे वेद्यामानीय युनक्ति पूर्व दक्षिणं तत उत्तरं ततो दक्षिणाप्रष्टिं ततः सव्याप्रष्ठिम्। अनिर्देषात्त्रयाणां योजने प्राप्ते चतुर्भिरित्युक्तमिति सूत्रार्थः। रथदेवत्यम्। हे रथ, त्वमिन्द्रस्य वज्रोऽसि। युनक्ति। रथदेवत्यम्। हे रथ,

त्वमिन्द्रस्य वज्रोऽसि। युनक्ति। रथदेवत्यम् । प्रशास्त्रो मित्रावरुणयोः देवयोः प्रशिषा प्रशासनेन हे रथ, त्वां युनज्मि योजयामि। 'अव्यथायै त्वेति सुन्वन्नारोहतीति' (का. 15। 6। 17) यजमानश्चात्चालदेशस्थः रथमारोहति। रथदेवत्यम्। अरिष्टोऽनुपहिंसितः अर्जुनोऽर्जुनतुल्य इन्द्र इत्यर्थः । 'अर्जुनो ह वै नामेन्द्रः' (5। 4। 3। 7) इति श्रुतेः। एवंभूतोऽहं हे रथ, त्वा त्वामव्यथायै। 'व्यथ भयचलयोः'। अभयाय अचलनाय वा। स्वधायै अन्नरसाय च त्वामधितिष्ठामि। 'मरुतामिति दक्षिणधुर्य प्राजतीति' (का. 15। 6। 18)। यजमानेन सहारूढो यन्ता दक्षिणाश्वं कशया प्रेरयेत्। धुर्यदेवत्यम्। हे धुर्य, मरुतां देवानां प्रसवेनाज्ञया त्वं जय शत्रूनिति शेषः। 'गत्वां मध्ये स्थापयत्त्रयपामेति' (का. 15। 6। 19)। पूर्वमेवाहवनीयोत्तरतः स्थापितानां गवां मध्ये तं रथं स्थापयेत्। यजमानदेवत्यम्। वयं मनसा सह अपामप्राप्तवन्तो यदुपक्रान्तं तत्कर्म 'धानुरात्यौँपस्पृशति गां यजमानः समिन्द्रियेणेति' (का. 15। 6। 20)। धनुः कोटया गां स्पृशेत्। यजमानदेवत्यम्। वयमिन्द्रियेण वीर्येण सङ्गताः स्मः ।।21।।

### द्वाविंशी

मा तं इन्द्र ते वयं तुराषाडयुंक्तासो अब्रह्मता विदंसाम।
तिष्ठा रथमधि यं वंज्रहस्ता रश्मीन्देव यमसे स्वश्वांन् ।।२२।।

**अन्वय :** (हे) वज्रहस्त देवइन्द्र! यं रथम् अधितिष्ठ, (अधितिष्ठसि) यस्य च स्वश्वान् रश्मीन् आयमसे (आयच्छसि) (हे) तुराषाड् इन्द्र! ते वयं ते तव अयुक्तासः मा उपक्षीणा मा भवाम। विदसाम आ ब्रह्मते मा (विदसाम)।

**व्याख्या :** हॉथ में वज्रधारण करने वाले हे इन्द्र! आप जिस रथ में बैठते हैं और-जिस उत्तमघोड़ों की लगाम सम्भालते हैं, हे शत्रुपराभवकारी इन्द्र। आपके भक्त, हमलोग आपके रथ से भिन्न (अलग) होकर उपक्षीण (नष्ट) न हों, क्योंकि ब्रह्मभाव से अतिरिक्त वस्तु क्षीण हो जाती है। अतः आप हमें भिन्न (अलग) न करें। ब्रह्म भाव को प्राप्त करना ही जीवन की पूर्णता है। अतः इससे भिन्न न होने की प्रार्थना की गई है। यह जीव ब्रह्मभाव को प्राप्त कर स्वयं ब्रह्मरूप हो जाता है। इसीलिए अहं ब्रह्मास्मि कहा गया है।

**म॰ :** 'तावखूयो वा गोस्वामिने दत्त्वा पूर्वेण यूपं परीत्यान्तः-पात्यदेशे स्थापयति मा त इति' (का. 15। 6। 22)। स्थापितगवां पतये स्वभ्रात्रे तावत् शतमधिकं वान्यद्दत्त्वा यूपात् पूर्वदिशि परीत्यान्तःपात्यदेशे रथं स्थापयेत्। इन्द्रदेवत्या त्रिष्टुप् संवरणदृष्टा। हे वज्रहस्त, वज्रं हस्ते यस्य तत्संबुद्धिः हे देव दीप्यमान, त्वं यं रथमधितिष्ठ लडर्थे लोट्। अधितिष्ठसि। 'द्व्यचोऽतस्तिङः' (पा. 6। 3। 135) इति दीर्घः। यस्य च रश्मीन्प्रग्रहानायमसे आयच्छसि। किंभूतान् रश्मीन्। स्वश्वान् शोभना अश्वा येषु तान्। हे तुराषाट्, तूर्णं सहते शत्रूनभिभवतीति तुराषाट् हे इन्द्र ऐश्वर्ययुक्त, ते त्वदीया वयं ते तव तस्मिन् रथे आयुक्ताः तस्माखिन्नाः सन्तो मा विदमास 'दसु उपक्षये' विविधमुपक्षीणा मा भवाम। तत्र हष्टान्तः। अब्रह्मतां लुप्तोपमानम्। अब्रह्मतेव ब्रह्म विज्ञानानन्दस्वभावमनश्वरम् तस्य भावो ब्रह्मता न ब्रह्मता अब्रहता यथा ब्रह्मभावादन्यद्वस्तु विदस्येदेवं वयं मा विदस्येमहीत्यर्थः ।।22।।

## त्रयोविंशी

**अ॒ग्नये॑ गृ॒हप॑तये॒ स्वाहा॒ सोमा॑य॒ व॒नस्प॑तये॒ स्वाहा॑ म॒रु॒ता॒मोज॑से॒ स्वाहेन्द्र॑स्येन्द्रि॒या॒य॒ स्वाहा॑। पृथि॑वि मा॒त॒र्मा मा॑ हिꣳसी॒र्मो॑ऽअ॒हं त्वाम् ।।२३।।**

**अन्वय :** गृहपतये अग्नये स्वाहा, वनस्पतये सोमाय स्वाहा, मरुताम् ओजसे स्वाहा, इन्द्रस्य इन्द्रियाय स्वाहा! हे मातः पृथिवि! मा मां हिंसीः। अहं त्वां मा हिंसिषम्।

**व्याख्या :** गृहस्थाश्रम के पालक हे अग्निदेव तथा वनस्पतिरुप सोमदेव आपके लिए यह आहुति समर्पित है। इसी प्रकार मरुद्‌गणों को बल तथा इन्द्र को इन्द्रियसम्बन्धी सामर्थ्य प्रदान के लिए यह आहुति समर्पित करता हूँ। हे माता पृथिवी तुम मेरी हिंसा न करो, मैं भी तुम्हारी हिंसा न करुँ।

**म॰ :** 'अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रमिति (का. 15। 6। 23)। रथविमोचनीयसंज्ञाश्चतिस्त्र आहुतीर्जुहोति। चत्वारि यजूंषि लिंगोक्तदेवत्यानि। गृहाश्रमपालकायाग्नये स्वाहा सुहुतमस्तु। वनस्पतिरूपिणे सोमाय हविर्दत्तमस्तु। इन्द्रस्येन्द्रसंबन्धिने इन्द्रियाय वीर्याय

स्वाहा। मरुतां संबन्धिने ओजसे बलाय हविर्दत्तमस्तु। 'भूमिमवेक्षते पृथिवि मातारिति' (का. 15। 6। 24)। रथस्थएव यजमानो भूमिं पश्येत्। भूमिदेवत्यम्। हे मातर्जगन्निर्मात्रि, हे पृथिवि भूमे, त्वं मा मा मां हिंसीः हिंसां मा कार्षीं। अहमपि त्वां पृथिवी मो मा उ हिंसिषम् ।।23।।

## चतुर्विंशी

**हृ॒ꣳसः शु॑चि॒षद्व॒सु॑रन्तरिक्ष॒सद्धोता॑ व्वेदि॒षदति॑थिर्दुरोण॒सत्। नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जाऽऋ॑त॒जा अ॑द्रि॒जाऽऋ॒तं बृ॒हत् ।।२४।।**

**अन्वय :** (यश्च) हंसः शुचिषद् वसुः अन्तरिक्षसद् होता वेदिषत्, अतिथिः दुरोणसद्, नृषद, वरसद्, ऋतसद् व्योमसद्, अब्जा गोजा ऋतजा अद्रिजा बृहत् ऋतम् (स एवास्माकं यज्ञं सम्पादयेत्)।

**व्याख्या :** जो परमात्मा अहंकार को नष्ट करने वाले आदित्य के रुप में स्थित हैं, जो अन्तरिक्ष में वायुरुप से स्थित हैं। अग्निरुप से वेदि पर स्थित रहने वाले, अतिथि के रुप में सभी के पूज्य, मनुष्यों में प्राणरुप से होकर अवस्थित है। यज्ञगृह में आहवनीय के रुप में विराजमान रहने वाले, सभी पदार्थों में तद्विभूति के रुप में विराजमान आकाश मण्डल में व्याप्त रहने वाले हैं। वही प्रभु जल में मत्स्यादि के रुप में उत्पन्न होते हैं। इस पृथिवी पर चारों प्रकार के जीवों के रुप में उत्पन्न होते हैं। सत्य के रुप में भी वहीं है, अर्थात् सत्यस्वरुप है। पाषाणों में, अग्नि के रुप में सर्वत्र वही भासित होते हैं। ऐसे परब्रह्म हंस को रथ से उतारता हूँ।

**म० :** 'ऽवरोहति हंसः शुचिषदिति' (का. 15। 6। 25)। यजमानो रथादवरोहति। सप्रपंचपरब्रह्माभिधायिनी सूर्यदेवत्यातिजगती वामदेवदृष्टा। हन्त्यहंकारमिति हंसोभगवानादित्य एवंविधः त्वं प्रत्यवतरामीति वाक्यशेषः। किंभूतो हंसः। शुचिषत् शुचौ दीप्तौ सीदतीति शुचिषत् आदित्यरूपेण। तथा वसुर्वासयिता नराणां प्रवर्तकः। अन्तरिक्षे सीदतीत्यन्तरिक्षसत् वायुरूपेण। होता आह्वाता देवानाम। वेदिसीदतीति वेदिषत् अग्निरूपेण। अतिथिःसर्वेषां पूज्यः। दुरोणे यज्ञगृहे सीदतीति दुरोणसत् आहवनीयादिरूपेण।नृषु मनुष्येषु प्राणभावेन सीदतीति नृषत्। वरेषु उत्कृष्टेषु स्थानेषु सीदतीति वरसत्। ऋतौ यज्ञे सीदतीति ऋतसत्। व्योम्निआकाशे

मण्डलरूपेण सीदतीति व्योमसत्। एवं सर्वत्र स्थिततत्वेन स्तुत्वा सर्वत्रोत्पत्तिद्वारेण स्तौति। यः अब्जाः अप्सु उदकेषु जायतेमत्स्यादिरूपेणेत्यब्जाः। गवि पृथिव्यां जायते चतुर्विधभूतग्रामरूपेणेति गोजाः। ऋते सत्ये जायत इति ऋतजाः। अद्रौ पाषाणे अग्निरूपेण जायत इत्याद्रिजाः। अद्रिर्मेषो वा अद्रौ मेघे जलरूपेण जायत इति वा। ऋतम् 'ऋ गतौ' सर्वत्र गतम्। बृहत् महत्परिवृद्धमपर्यन्तं परब्रह्मरूपो यो हंसस्तं प्रति रथादवतरामीति भावः। यद्वा हंसब्रह्मरूपो रथ उच्यते। हन्ति पृथिवीमिति हंसः रथः। बृहत् महत् प्रौढमृतं यज्ञं संपादयत्विति शेषः। किंभूतो हंसः। शुचिषत् शुचौ देवयजने रथवाहने वा सीदतीति। वसुः स्वस्योपरि यजमानं वासयतीति। अन्तरिक्षसत् वृक्षगुल्माद्यनवरुद्धेऽतरिक्षे यजमानं वासयतीति। अन्तरिक्षसत् वृक्षगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीति। होता होतृसमानः। तदेव कथमित्यत आहवेदिषत् वेद्यां सीदतीति। अतिथिः अतिथिवत्पूज्याः। दुरोणसत् ऋते यज्ञे, वाजपेयादौ सीदतीति व्योमसत्। सूर्य बोढुं व्योमन्याकाशे सीदतीति। अब्जाः 'अप्सुयोनिर्वा अश्व'इति श्रुतेरज्यो जातैरश्वैरुपेतत्वादब्जाः। गोजाः गोशब्दवाच्याद्व्रजाजायत इति गोजाः। इन्द्रोवृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत्तस्य स्"स्तृतीयंरथस्तृतीयं यूपस्तृतीयम्' इति तैतित्तरीयश्रुतेः ऋतजा+ ऋतं यज्ञमुद्दिश्यजातत्वाहजतजाः। अद्रिजाः अद्रिभ्यः पाषाणसदृशकाष्ठेभ्यो जात्वाद्रिजाः ।।24।।

### पञ्चविंशी

**इयंदुस्यायुंरुस्यायुर्मयिं धेहि युङ्ङंसि वर्चोऽसि वर्चो मयिं धेह्यूर्गस्यूर्जम्मयिं धेहि। इन्द्रंस्य वां वीर्यकृतों बाहू अंभ्युपावंहरामि ।।२५।।**

**अन्वय :** (हे रुक्म!) त्वम् इयदसि, आयुरसि, मयि आयुं धेहि। युङ्असि वर्चः असि, मयि वर्चो धेहि। हे औदुम्बरि शाखे ऊर्गसि मयिऊर्जं धेहि। वीर्यकृतः इन्द्रस्य बाहू अभ्युपावहरामि।

**व्याख्या :** हे रुक्म (सुवर्णाभूषण) तुम सौरत्ती परिमाणवाले हो। आयु रुप हो अतः मुझे दीर्घजीवन प्रदान करो। तुम सभी कार्यों के योजक हो, तेजोरुप हो अतः मुझे भी तेज प्रदान करो। हे औदुम्बर शाखे! तुम अन्नरुप हो अतः हमें अन्न प्रदान करो। हे यजमान की भुजाओं। तुम वीर कर्म करने वाले इन्द्ररुप यजमान की भुजा हो। मैं तुम दोनों को मैत्रावारुणी जल में झुकाता हूँ। नीचे करता हूँ।

**म॰ :** 'उपस्पृशति शतमानावियदसीति' (का. 15। 6। 29)। शालादक्षिणभागे स्थापितस्य रथवाहनस्य दक्षिणचक्रे बद्धौ शतमानौ शतरक्तिकानिर्मितौ सौवर्णौ मणी यजमानः स्पृशति। द्वादशाक्षरे यजुषी शतमानदेवत्ये। हे रुक्म, त्वमियदसि एतावत्परिमाणं शतरक्तिकापरिमितमसि। आयुरसि जीवनमसि तस्मादायुः शताब्दपरिमितं मयि धेहि। यो हि यदात्मकः स तद्दातुमुत्सहते। यतस्त्वं शतमानमसि ततः शताब्दपरिमितमायुर्मयि रोपय। युङसि युनक्ति यज्ञं संभारनिचयेन दक्षिणादानेन वेति युङ् वर्चस्तेजस्वी भवसि। अतो मे मम वर्चः तेजो धेहि। 'तौ ब्रह्मणे दत्त्वोर्गसीति शाखामुपस्पृशतीति' (का. 15। 6। 30)। तौ शतमानौ ब्रह्मणे दत्त्वा पूर्वोक्तरथवाहने एवोपगूहितारमौदुम्बरीं शाखामुपस्पृशेत्। शाखादेवत्वम्। हेऔदुम्बरि शाखै, त्वमूर्गसि अन्नरूपा भवसि। तत ऊर्जमन्नं मयि धेहि स्थापय। 'इन्द्रस्य वामित्यवहरते बाहू, अहं वां युवामुपावहरामि मैत्रावरुणीपयस्यां प्रति नीचौ करोमि ।।25।।

## षड्विंशी

**स्योनासि सुषदासि क्षत्रस्य योनिरसि। स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद ।।२६।।**

**अन्वय :** (हे आसन्दि!) त्वं स्योनाअसि, सुखदा असि, क्षत्रस्य योनिः असि। (हे यजमान!) स्योनाम् आसीद्, सुखदाम् आसीद्, क्षत्रस्य योनिमासीद।

**व्याख्या :** हे आसन्दी! तुम सुखकारी हो। सुखपूर्वक उपवेशन के योग्य हो। हे अधीवास! (आसन्दी के उपरः विछाये जाने वाले वस्त्र) तुम इस (क्षात्रधर्म सम्पन्न) राजा को धारण करने वाले हो। हे यजमान तुम इस आसन्दी पर सूखपूर्वक बैठो। तथा क्षत्रियराजा के इस स्थान पर विराजमान होओ।

**म॰ :** 'प्राक् स्विष्टकृतः खादिरीमासन्दीं रज्जुं तां व्याघ्रचर्मदेशे निदधाति स्योनासीति' (का. 15। 6। 33-7)। पयस्यायाः स्विष्टकृद्धोमात्प्राक् रज्जुभिर्व्यूतां खादिरीमंचिकां व्याघ्रचर्मदेशे मैत्रावरुणधिष्ण्यस्य पुरो निदधाति। आसन्दीदेवत्यम्। हेआसन्दि, त्वं स्योना सुखरूपासि सुखकरी भवसि। सुषदासि सुखेन सीदन्ति यस्यां सा सुषदासुखेनोपवेष्टुं योग्यासि।

'अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति' (का. 15। 7। 2)। आसन्द्यां वस्त्रमाच्छादयति। अधीवासदैवतम्। हे अधीवास, त्वं क्षत्रस्य क्षत्रिस्य योनिर्मातृवद्धारकत्वेन कारणमसि। 'सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति' (का. 15। 7। 3)। आसन्द्यां यजमानं स्थापयेत्। यजमानदेवत्यम् हे यजमान, स्योनां सुखकरीमासन्दीमासीद आरोह। सुषदांसुखोपवपेशन-योग्यामासीद। क्षत्रस्य योनि स्थानमासन्दीमासीदत् ।।26।।

## सप्तविंशी

**निषंसाद धृतव्रंतो व्वरुंणः पुस्त्यास्वा। साम्रांज्याय सुक्रतुंः ।।२७।।**

**अन्वय :** धृतव्रतः वरुणः सुक्रतुः साम्रज्याय पस्त्यासु आनिषसाद।

**व्याख्या :** यज्ञरुप कर्म को स्वीकार करने वाले राज्यों पर आनेवाले अनिष्टों का निवारण करने वाले, सत्यसङ्कल्पवाले, तथा राजकार्य को यथोचित न्यायरुप से पालन करने वाले राजा ही इस पद पर अभिषिक्त होकर विराजमान होते हैं। यहाँ वरुण शब्द का अर्थ अनिष्टनिवारक है। वारयत्यनिष्टमिति वरुणः।

**म० :** 'निषसादेत्युरोऽस्यालभत इति' (का. 17। 4। 8)। अध्वर्युर्यज-मानहृदयं स्पृशति।वरुणदेवत्या गायत्री शुनः शेपदृष्टाः अष्टषट्सप्तवर्णपादत्वा-द्वर्धमाना गायत्री। असौ यजमानः पस्त्यासु विशु प्रजासु आ निषसाद। 'विशो वै पस्त्याः' (5। 4। 4। 5) इति श्रुतेः। आधिपत्येनोपविवेश। यदासन्द्यां निषण्णः स प्रजास्वेव निषण्ण इत्यर्थः। 'व्यवहिताश्च' (पा. 1। 4। 82) इति आङ् उपसर्गस्य क्रियापदेन व्यवस्थानम्। किंभूतो यजमानः। धृतव्रत धृतं व्रतं यज्ञलक्षणं कर्म येन स्वीकृतयज्ञः। वारयति अनिष्टमिति वरुणः। तथा सुक्रतुः शोभन संकल्पः शोभनप्रज्ञो वा। किमर्थं निषसाद। साम्राज्याय सम्राजो भावः साम्राज्यम्।: सम्राट्भावाय राज्याय' (5। 4। 4। 5) इति श्रुतेः ।। 27।।

## अष्टाविंशी

**अभिभूरंस्येतास्ते पञ्च दिशंः कल्पन्तां ब्रह्मंस्त्वं ब्रह्मासिं सवितासिं सत्यप्रंसवो वरुंणोऽसि सत्यौजाऽइन्द्रोंऽसि विशौंजा रुद्रोऽसि**

**सुशेवः। बहुंकार श्रेयंस्कर भूयंस्करेन्द्रंस्य वज्रोऽसि तेनं मे रध्य ॥२८॥**

**अन्वय :** (हे राजन!) त्वम् अभिभूरसि। एताः पञ्चदिशाः ते कल्पन्ताम्। हे ब्रहान्। त्वं ब्रह्मा असि, त्वं सविता असि, सत्यप्रसवः वरुणः असि, सत्यौजा विशौजा इन्द्रोऽसि। सुशेवः रुद्रोऽसि। हे बहुकार! श्रेयस्कर! भूयस्कर! त्वम् इन्द्रस्य वज्रोऽसि। (हे स्फ्य!) तेन मे रध्य।

**व्याख्या :** हे यजमान। तू (अपने गोपनीय दूतों द्वारा) सभी पूर्वादिदिशाओं में व्याप्त रहने वाले हो। अर्थात् पूर्व पश्चिम, उत्तर, दक्षिण तथा ऊपर (ऊर्ध्व इन पाँचों दिशाओं में तुम्हारा सदा नियत्रंण रहे। ब्रह्मा (ऋत्विक्) कहता है—हे यजमान! तुम्हीं प्रजाओं में तेजरुप हो। तुम्हीं रुद्ररुप में दुष्टों को रुलाने वाले, तथा भक्तों को सुख प्रदान करने वाले हो। हे यजमान! तुम अनेककार्यो को करने वाले सर्वविध कल्याण के प्रदाता तुम ही हो। तुम यहाँ आओ। हे कल्याण नाम वाले। हम तुम्हारा आह्वान करते हैं। हे स्फ्य! तुम इन्द्रदेव के वज्र के समान हो अतः मेरे यजमान के कार्य को निर्विघ्न सम्पन्न करो। अथवा मेरे लिए राष्ट्र को वश में करो।

**म० :** 'अभिभूरित्यस्मै पञ्चाक्षान्पाणावाधायेति' (का. 15। 7। 5)। यजमानहस्ते द्यूतसाधनभूतान् पंचाक्षान् सौवर्णकपर्दान्निदध्यात्। अक्षा यजमानो वा देवता। चतुर्णामक्षाणां कृतसंज्ञा पंचमस्य कलिरिति। यदा पञ्चाप्यक्षा एकरूपाः पतन्ति उत्ताना अवाधो वा तदा देवितुर्जयः। तत्र कलिः सर्वानक्षानभिभवति तं प्रत्युच्यते, त्वमभिभूरसि अभिभविता अभितो व्याप्तोसि। एताः कपर्दिकोपलक्षिताः पंच दिशः पूर्वादयश्चतस्त्र ऊर्ध्वा चेति पंच दिशः ते त्वदर्थं कल्पन्तां त्वत्प्रयोजनसमर्था भवन्तु। कलेः सर्वाक्षाभिभावकत्वासुन्वतोऽपि जयापेक्षित्वात् पंचाक्षव्यापकत्वमिति भावः। 'वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः प्रत्याह व्यत्याससविता वरुण इन्द्रो रुद्र इति त्वां ब्रह्मासीत्यादिभिसदिनैवान्त्यमिति' (का. 15। 7। 7। 9) यजमानो राज्यं मेऽस्त्वित्यादि द्रव्यं संप्रार्थ्य पंचवारं ब्रह्मान्निति मन्त्रेण ब्रह्माणमामन्त्रयते। एवमाभिमन्त्रितो ब्रह्मा त्वं ब्रह्मसत्यादिभिः सवितासि वरुणोऽसि इन्द्रोऽसि रुद्रोऽसीत्श्येतैन्त्रैर्व्यत्यासं यजमानं प्रत्याह। तेन चतुर्णामपि

मन्त्राणामादौ त्वं ब्रह्मासीत्यादिभिः प्रयोगः। व्यत्यासमित्यादौ यजमानो ब्रह्मन्नित्यामन्त्रयते। ब्रह्मा त्वं ब्रह्मासि सवितासि सत्यप्रसव इति प्रत्याह।पुनर्यजमानो ब्रह्मान्निति सवितासि सत्यप्रसव इति प्रत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते। ब्रह्मा त्वं ब्रह्मासि वरुणोऽसि सत्यौजा इति प्रत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते ब्रह्मा त्वं ब्रह्मासि इन्द्रोऽसि विशौजा इत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते। ब्रह्मा त्वं ब्रह्मासि रुद्रोऽसि सुशेव इत्याह। अन्त्यं च पंचमं प्रतिवचमादिनैव त्वं ब्रह्मन्निति ब्रह्माणमामन्त्रयते कार्य ब्रह्मणेति सूत्रार्थः। ब्रह्मन् ब्रह्मदेवत्यम्। यजमानः प्रथमं ब्रह्माणमामन्त्रयते। हे ब्रह्मन्, ऋत्विक्, त्वाममन्त्रय इति शेषः। त्वं ब्रह्मासि। पंच यजूंषि यजमानदेवत्यानि। ब्रह्मामन्त्रितो यजमानं प्रत्याह हे यजमान, त्वं ब्रह्मासि महान् भवसि सविता प्रेरकश्चासि। सत्यप्रसवः सत्यः प्रसवोऽनुज्ञा यस्य। द्वितीयं प्रत्याह त्वं ब्रह्मासि वरुणोऽनिष्टनिवारकोऽसि। सत्यौजाः सत्यमोजो यस्य अमोघवीर्योऽसि सत्यो वा ओजो यस्य। तृतीयं प्रत्याह त्वं ब्रह्मासि इन्द्रोऽसि ऐश्वर्यवानसि विशौजाः विक्षु प्रजास्वोजस्तेजो यस्य विडौजा इति प्राप्ते विशौजा इति छान्दसम्। अतएव पदकारो नावग्रहं चकार। चतुर्थंप्रत्याह। त्वं ब्रह्मासि रुद्रोऽसिहे राजन्, त्वं रुद्ररूपोऽसि शत्रूणां रोदनाद्रावणाय। सुशेवः शेव इति सुखनाम। शोभनं शेवः सुखं यस्मात् शोभनं सुखयिता। त्वं ब्रह्मासीत्येतावदेव पंचमं प्रतिवचनम्। 'बहुकारेति च ह्वयत्येवं नामानमिति' (का. 15। 7। 10)। यजमानं बहुकारेत्यादि सुमंगलनामानं नरमाकारयति।लिंगोक्तदैवतम्। हे बहुकार, बहु कार्य करोतीति बहुकारः श्रेयः करोतीति श्रेयस्करः भूयो बहुतरं करोतीति भूयस्करः तेषां संबोधनानि हे बहुकारेत्यादि।कल्याणनामन्, त्वामाह्वय इति शेषः। 'स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वैन्द्रस्य वज्र इति' (का. 15। 7। 11)। अस्मै यजमानाय स्फ्यं ददाति द्यूतभूमिकरणाय। स्फ्यदेवत्यम्। हे स्फ्य, इन्द्रस्य वज्रस्त्वमसि। 'इन्द्रो ह यत्र वृत्रय वज्रं प्रजहार' इत्यादि 'तस्य स्फ्यस्तृतीयम्' (1। 2। 4। 1) इति श्रुतेः। तेन हेतुना मे मम यजमानं रध्य।रध्यतिर्वशगमने वै स बलीयान्भवति' (5। 4। 4। 15) इति श्रुतेः। यद्वातेन में रध्यं यस्मात्यं वज्ररूपस्तेन कारणेन मम रध्यं द्यूतभूमौ परिलेखनरूपं कार्य साध य ।।28।।

## एकोनत्रिंशी

**अ॒ग्निः पृ॑थु॒र्धर्म॑ण॒स्पति॑र्जु॒षा॒णो अ॒ग्निः पृ॑थु॒र्धर्म॑ण॒ स्पति॒राज्य॑स्य वे॒तु स्वाहा॒ स्वाहा॑कृ॒ताः सूर्य॑स्य र॒श्मिभि॑र्यतध्वꣳ स॒जा॒तानां॑ मध्य॒मेष्ठ्या॑य ।।२९।।**

**अन्वय :** अग्निः पृथुः धर्मणः पतिः जुषाणः (प्रीयमाणः) पृथुः धर्मणस्पतिः अग्निः आज्यस्य आज्यं वेत्तु (घृतं पिबतु) स्वाहा। हे अक्षाः यूयं स्वाहा कृताः सूर्यस्य रश्मिभिः यतध्वम् सजातानां मध्यमेष्ठ्याय। यत्नंकुरुत।

**व्याख्या :** अग्निदेव, देवों में प्रथम होने से महान हैं, संसार को धारणकरने वाले, यज्ञादिधर्मों के पालक तथा हमारे यज्ञ का सेवन करते हुए अग्निदेव हमारी दी हुई आज्याहुति को स्वीकार करें। यह आहुति सुहुत हो। स्वहाकार से तृप्त हुई ये अग्नियाँ सूर्य की किरणों से स्पर्धा करने में सचेष्ट हों। तुम्हारी कृपा से मैं (यजमान) अपने बन्धुबान्धवों में श्रेष्ठ बनूँ।

**म० :** 'द्यूतभूमौ हिरण्यं निधायाभिजुहोति चर्तुगृहीतेनाग्निः पृथुरिति' (15। 7। 16)। एवं कृतायां द्यूतभूमौ कनकं निधाय तदुपरि चतुर्गृहीताज्यं जुहुयात्। अग्निदेवत्यम्। अग्निः आज्यस्य वेतु। कर्मणि षष्ठी। घृतं पिबतु स्वाहा सुहुतमस्तु। किंभूतोऽग्निः। पृथुः देवानां प्रथमत्वाद्विशालः। तथा धर्मणस्पतिः धारणं धर्म जगतो प्रथमत्वाद्विशालः। तथा धर्मणस्पतिः धारणं धर्म जगतो धारणस्य धर्मस्य वा स्वामी। जुषाणः प्रीयमाणः हूयमानं हविः सेवमानो वा। अग्निःपृथुर्धर्मैणस्पतिरिति पुनःपाठ आदरार्थः। 'अक्षान्निवपति स्वाहाकृता इति' (का. 15। 7। 16)। पूर्वोक्तपंचाक्षान्द्यूतभूमौ क्षिपति। अक्षदेवत्यम्। हे अक्षाः, यूयं स्वाहाकृताः स्वाहाकारपूर्विकयाहुत्या तर्पिताः सन्तः सूर्यस्य रश्मिभिः।किरणैर्यतध्वं स्पर्धां कुरुत। सजातानां समानजन्मनां भ्रातृणां क्षत्रियाणां मध्यमेष्ठ्या मध्यमप्रदेशे यजमानावस्थानाय च यतध्वं यत्नं कुरुत। यजमानं सर्वक्षत्रियश्रेष्ठं कुरुतेत्यर्थः। मध्ये भवो मध्यमः मध्यमे प्रदेशे तिष्ठतीति मध्यमेष्ठः तस्य भावो मध्यमेष्ठ्यं तस्मै ।।29।।

## त्रिंशी

**स॒वि॒त्रा प्र॑सवि॒त्रा सर॑स्वत्या वा॒चा त्वष्ट्रा॑ रू॒पैः पू॒ष्णा प॒शुभि॒रि-**

**न्द्रेणास्मे बृहस्पतिना ब्रह्मणा व्वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा विष्णुना दशम्या देवतया प्रसूतः प्रसर्पामि ।।३०।।**

**अन्वय :** देवतया प्रसूतः (अहं यजमानः) प्रसर्पामि। प्रसवित्रा सवित्रा, वाचा सरस्वत्या, रुपैः त्वष्टा पशुभिः पूष्णा, अस्मे इन्द्रेण, ब्रह्मणा बृहस्पतिना, ओजसा वरुणेन, तेजसा अग्निना, सोमेन राज्ञा, दशम्या विष्णुना (प्रसूतः) प्रसर्पामि)।

**व्याख्या :** मैं, सभी पुनीत कर्मों के प्रेरक सूर्य से, वाणी से विभूषित सरस्वती से, रुपों के निर्माता त्वष्टा से, पशुओं से सेवित पूषा से, इन्द्र देवता से, वृहस्पति से, ओज से् संयुक्त वरुण से, तेजोमण्डित अग्नि से औषधियों तथा नक्षत्रों के राजा चन्द्रमा से, दशावतार धारण करने वाले यज्ञाधिष्ठातृदेव विष्णु से, आज्ञा प्राप्त कर मैं यजमान आगे के मार्ग पर चलता हूँ।

**म॰ :** 'पितामहदशगण सोमपाना संख्याय सर्पण सवित्रेति वानुवाकमुक्त्वेति' (का. 15। 8। 15-16)। पित्रादयः पूर्वजाः पितामहशब्देनोच्यन्ते। ऋत्विजोऽन्ये विप्राश्च मिलिताः शतसंख्याः सन्तो दशपेयमागे सौत्येऽहनि प्रतिसवनं सर्पणात्प्राक् स्वं स्वं सोमयाजिनां पित्रादीनां दशानां गणं गणयित्वा अमुकः प्रथमः सोमपः असौ द्वितीयोऽसौ तृतीय इत्यादिदशमपर्यन्तान् सोमयाजिनो गणयित्वा विभूरसीत्यादिसर्पणं धिष्ण्योपस्थानं कुर्वन्ति। सर्पणं भक्षणकाले सदःप्रवेशो वा। पक्षान्तरमाह सवित्रेति। यद्वा सवित्रा प्रसवित्रेत्येककण्डिकात्मकमनुवाकं पठित्वा शतं विप्राः सर्पणं कुर्वन्ति। दशानां सोमयाजिमनामसंभवादयमेव पक्षः श्रेयानिति सूत्रार्थः सवित्रादिदेवत्यात्यष्ठिः एताभिर्दशभिर्देवताभिः प्रसूत आज्ञप्तोऽहं प्रसर्पामि सर्पणं करोमि। प्रत्येकपाठादेवैकवचनं सर्पामीति। काभिर्दशभिः प्रसूत इत्यत आह। प्रसवित्रा भ्यनुज्ञानकारिणा सवित्रा सूर्येण। वाचा वाग्रूपया सरस्वत्या। रूपैरुपलक्षितेन त्वष्ट्रा देवेन। 'त्वष्टा रूपाणामधिपतिः' इत्युक्तेः। पशुभिरुपलक्षितेन पूष्णा देवेन। अस्मै अनेन इन्द्रेण। विभक्तेःशेआदेशः ब्रह्मणा देवयागे ब्रह्मत्वंकर्त्रा बृहस्पतिना। ओजसा ओजस्विना वरुणेन। तेजसा तेजस्विना अग्निना। राज्ञा ओषधिविप्राधिपेन दीप्यमानेन वा सोमेन चन्द्रेण। दशम्या दशसंख्यापूरिकया। विष्णुना। देवतया यज्ञाधिष्ठाना विष्णुरूपेण

देवेन। एतैराज्ञप्तः प्रसर्पामीत्यर्थः ।।30।।

## एकत्रिंशी

**अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व। वायुः पूतः पवित्रेण प्रत्यङ्क्सोमोऽअतिस्रुतः। इन्द्रस्य युज्यः सखा ।।३१।।**

**अन्वय :** हे व्रीहि (धान्य)! अश्विभ्यां पच्यस्व, सरस्वत्यै पच्यस्व, सुत्राम्णे इन्द्राय पच्यस्व। वायुः पूतः पवित्रेण पूतः इन्द्रस्य युज्यः सखा सोमः प्रत्यङ्. अति स्रुतः।

**व्याख्या :** हे व्रीहि (धान्य!) अश्विनी कुमारों की प्रसन्नता के लिए पको। सरस्वती के लिए, संसार की रक्षा करने वाले इन्द्र के लिए पको। वायु स्वयं पवित्र हैं सोम वायु द्वारा पवित्र होकर कुशमय पवित्रीद्वारा शुद्ध हुआ, इन्द्र के प्रियमित्र सोम अधोमुख पात्र में पीने के लिए निर्गत हो रहा है।

**म॰ :** अथ राजसूयगतचरकसौत्रामणीमन्त्रा उच्यन्ते। राजसूयप्रान्ते विहिता सौत्रामणी चरकसौत्रामणीत्युच्यते तन्मन्त्राणामश्विनावृषी। 'पक्त्वौदनं विरूढाश्रूणींकृत्वाश्विभ्यां पच्यस्वेति संसृजतीति' (का. 15। 9। 25)। विरूढा जाताङ्कुरा अजातांकुराश्च वीहयः क्षौमे बद्धाः सन्ति तन्मध्ये आजातांकुराणां व्रीहीणामोदनं पक्त्वा विरूढाव्रीहीन चूर्णीकृत्यौदनेन मिश्रयति। त्रीणि यजूंषि सुरादेवत्यानि। हे सुरे, त्वमश्विभ्यां पच्यस्व अश्विनोरर्थाय पाकं कुरु। पाको नाम विपरिणामश्रेष्ठता। सरस्वत्यै देव्यै पच्यस्व। सुष्टु त्रायत इति सुत्रामा तस्मै इन्द्राय पच्यस्व। यतः सौत्रामण्येन्द्रस्य भैषज्यं कर्तव्यमस्ति। 'वपामार्जनान्ते कुशैः परिस्त्रुतं पुनाति वायुः पूत इति' (का. 15। 10। 10)। पशूनां वपामार्जनान्ते कर्मणि कृते दर्भैः सुरां कस्मिंश्चित्चत्पात्रे पुनाति। सोमदेवत्या गायत्री। वायुः 'सुपां सुलुक्' (पा. 7। 1। 39) इत्यादिना तृतीयैकवचनस्य सु आदेशः। सोमो वायुः वायुना पूतः शोषितः पवित्रेण कुशमयेन पूतः सन् प्रत्यङ् नीचेरधोमुखः सन् अतिस्त्रुतः अतिक्रम्य गतः। किंभूतः। इन्द्रस्य युज्यो योगार्हः सखा सखिभूतः। 'सोमः पूर्व पूतिगन्धोऽभूततो देवैर्वायुरुक्तस्त्वं सोमं सुगन्धं कुर्विति ततो वायुना सोमो दुर्गन्धमपहृत्य सुगन्धः कृतः' (12। 7। 3) इति श्रुत्योक्तं तदयं मन्त्रो

वदतीत्यर्थः ।।31।।

**द्वात्रिंशी**

**कुविदुङ्ग यवंमन्तो यवं चिद्यथा दान्त्यंनुपूर्वं वियूयं। इहेहैंषां कृणुहि भोजंनानि ये बर्हिषो नमंउक्तिं यजंन्ति ।। उपयामगृंहीतोऽस्यश्विभ्यांन्त्वा सरंस्वत्यै त्वेन्द्रांय त्वा सुत्राम्णें ।।३२।।**

**अन्वय :** हे सोम! यथा यवमन्तः कुविद् बहुलं यवं चित् अनुपूर्वं वियूय (पृथक्कृत्य) अंगं (क्षिप्रं) दान्ति लुनन्ति, (तथैव) इह एषां भोजनानि कृणुहि। ये बर्हिषः नम उक्तिं यजन्ति सुत्राम्णे। उपयाम गृहीतोऽसि-अश्विभ्यां, सरस्वत्यै इन्द्राय सुत्राम्णे त्वा (त्वाम्) गृह्णामि।

**व्याख्या :** हे सोम! जिस प्रकार कृषकगण विवेक पूर्वक यवयुक्त सस्य को उन्हें अलग अलग करके तेजी से काट लेते हैं ऐसे ही तुम यज्ञ करने वालों को तथा न करने वालों को पृथक करते हुए सभी स्थानों में उनके लिए भोग्य वस्तुओं को प्रदान करो जो यजमान बर्हि के ऊपर स्थित होकर हविष्यान्न को लेकर'' इन्द्राय स्वाहा'' आदि देवतोद्देश्यत्यागपूर्वक याग करते हैं उन्हें मनोभिलषित पदार्थ प्राप्त कराते हो।

हे सोम! तुम संसार की रक्षा करने वाले इन्द्र के लिए उपयाम ग्रहपात्र द्वारा गृहीत हो। मैं तुम्हें अश्विनीकुमारों, सरस्वती तथा इन्द्रदेवता के लिए ग्रहण करता हूँ।

**म० :** 'ग्रहं गृह्णाति कुविदंगेति त्रीन् वा प्रतिदेवतमेतयैवेति' (का. 15। 10। 12)। पूतायां सुरायां बदरीफलचूर्णंप्रक्षिप्य कुविदंगेत्येकं गृह्णाति। यथा। यद्वा कुविदंगेत्यृचैव त्रीन् ग्रहान्प्रतिदेवतं गृह्णाति। यथा। कुविदंग. उपयामगृहीतोऽस्यश्विभ्यांत्वेति प्रथमम्। कुविदंगउपयामगृहीतोऽसि सरस्वत्यै त्वेति द्वितीयम्। कुविदंगउपयामगृहीतोऽसीन्द्राय त्वां सुत्राम्ण इति तृतीयम्। तृचंकांक्षीवतसुकीर्तिदृष्टम्। आद्या सोमदेवत्याऽनिरुक्ता त्रिष्टुप्। कुविदिति-बहुनाम। 'अंगेति क्षिप्रनाम' (नि. 5। 17) चिदिति वितर्के। हे सोम, यथा यवमन्तः। यवा विद्यन्ते येषां ते यवमन्तः। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' (पा. 8। 2। 9) इति यवादीनां निषेधान्मतोर्मकारस्य वकाराभावः। बहुयवसंपन्नाः कृषीवलाः। कुवित् बहुलं यवं सर्वं यवमयं सस्यं चित्

